# अवतारिका

अभ्युदयनिश्रेयसहेतुभूतेषु धर्मेषु तद्रहस्येषु च श्रुतेष्वपि अल्पायासमनल्पफलञ्च पुमर्थसाधनं जिज्ञासमानेन युधिष्ठिरेण पृष्टो मोक्षधर्मादिप्रवक्ता पितामहो भीष्म आह स्म —

"जगत्प्रभुं देवदेवमनन्तं पुरुषोत्तमम् ।
स्तुवन्नामसहस्रेण पुरुषस्सततोत्थितः ॥
..................... ......... ...सर्वदुःखातिगो भवेत्' । इति ।

अथ तन्नामसहस्रं श्रोतुकामाय तस्मै, यानि भगवतो नामानि गुणयोगात् प्रवृत्तानि, तेषु यानि च मन्त्रैस्तद्दर्शिभिश्च परमेश्वराख्यानेषु परिगीतानि, तानि वक्ष्यामीति प्रतिज्ञया जनितावधानाय समुपादिशच्च 'विश्वं विष्णुः' इत्यादिना 'सर्वप्रहरणायुधः' इत्यन्तेन । सन्ति यद्यपि नानामूर्त्युपश्लोकनरूपाणि बहूनि सहस्रनामस्तोत्राणि, तथापि तेषु श्रीविष्णुसहस्रनामस्तोत्रे दृश्यते महाजनानामादरातिशयः, तेन तस्य प्रचारप्राचुर्यञ्च । नित्यकर्मसु अस्य जपमन्तर्भावयन्तस्सन्ति भारतमण्डले भूयांसः । रोगाणामुग्राणां प्रशान्त्यर्थमातुरानिमं प्रजप्य श्रावयन्ति । यस्य प्रदेशस्यान्तरिक्षमेतन्नामाक्षरैर्मुखरं भवति, तं परिहरन्ति किङ्कराः कृतान्तस्येति प्रयाणकाले श्रवणमस्य विष्णुलोकप्रापकमिति च जपमस्यावर्तयन्ति आसन्नमृत्यूनामुपकण्ठे । किं बहुना, सकलपुमर्थसाधकमसामान्यप्रभावञ्चेदं स्तोत्ररत्नम् । असदाख्यातञ्चैतद्धर्मपुत्रं प्रत्युपदेशात् पूर्वं परतश्च ज्ञानविज्ञानराशिना शान्तनवेन ॥

स्तोत्रस्यास्य सन्ति बहूनि व्याख्यानानि । येषु नायकायते श्रीशङ्करभगवत्पादैरनुगृहीतं भाष्यम् । प्रायशस्तदुपजीव्यैव प्रवृत्तानि व्याख्यानान्तराणि। गद्यरूपता हि दृष्टा बहुळं व्याख्यानानाम् । अस्य तु पद्यरूपाण्यपि विद्यन्ते विवरणानि । पूर्णत्रयीपुरस्थिते संस्कृतमहाविद्यालयीयग्रन्थागारे 'लघुवृत्तिः'

इति, माध्वमतानुयायिभिर्विबुधवर्यतीर्थश्रीपादैर्विरचित 'सहस्रनामव्याख्यानम्' इति च दृश्यते तादृशं विवरणद्वयम्। तत्र लघुवृत्तिः सप्तमदशकपरिसमाप्ति-पर्यन्तैवात्रोपलभ्यते ग्रन्थे।

'प्रणम्य विष्णुं यदुसिंहमच्युतं
जगज्जनिस्थाननिरोधसाक्षिणम्।
करोमि भक्त्या लघुवृत्तिमादरा-
त्सहस्रनामाख्यमनोविशुद्धये॥' इति तत्रस्थात् पद्यादवसीयते लघु-वृत्तिरिति ग्रन्थस्य नामेति। केवलं नामपदान्येव नायं व्याख्याता व्याचख्यौ; किन्तु भाष्यकारसरण्यनुसारी,

"वैशम्पायन उवाच—

श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः।
युधिष्ठिरश्शान्तनवं पुनरेवाभ्यभाषत" इत्यत आरभ्य नामसहस्र-श्रवणकीर्तनयोः फलाख्यानपर्यन्तं ग्रन्थम्। ग्रन्थान्तिमभागस्यानुपलम्भेपि उपक्रमानुगुण्येनोपसंहारस्सम्भाव्यते। व्याख्यानरीत्यवबोधाय वैशम्पायन उवाच इत्यादिप्रदर्शितभागस्य व्याख्यानमत्रोद्ध्रियते--

"व्यासशिष्यो महातेजास्स वैशम्पायनो मुनिः।
उवाच पुनरप्येवं राजानं जनमेजयम्॥

श्रुत्वावधार्य निश्चित्य धर्मान्नानाविधान् परान्।
अशेषेणैव कात्स्न्येन निश्शेषेणाविशङ्कया॥

पावनानि पवित्राणि पवित्रीकरणानि च।
सर्वशो बहुधा भेदैर्दानजप्यादिभेदतः॥

युधिष्ठिरो धर्मसुतः युधि युद्धे स्थिरोऽचलः।
राजा शान्तनवं भीष्मं शन्तनोस्तनयं सुतम्॥

पुनर्भूयोऽन्यधर्मस्य श्रोतुकामस्स सूक्ष्मदृक्।
अप्यर्थं एवकारोऽत्र पुनरप्यभ्यभाषत॥"

नामसहस्रे पुंस्त्रीक्लीबशब्दरूपैर्नामभिर्यथाक्रमं विष्णुः, देवता, ब्रह्म च विशेष्यत इति यद्यदुक्तं भाष्यकारैः, तत्सर्वमनेन व्याख्यातम्।

'यत्र पुल्लिङ्गनिर्देशस्तत्र विष्णुर्विशेष्यते।
स्त्रीलिङ्गे देवता, ब्रह्म नपुंसकपदे तथा॥' इत्येवमादिभिः कारिकाभिराख्यातम्। बह्वर्थानि नामानि प्रायेण बहुभिः पद्यैरेष व्याचख्यौ। यथा—

"विशत्यस्मिञ्जगत्सर्वं प्राकृतप्रळये यतः।
कारणैस्सह, सर्वेशस्तस्माद्विश्वमितीर्यते॥

सर्गादौ सकलं सृष्ट्वा मायया जगदीश्वरः।
विशत्यस्मिन् स्वयञ्चत्रि विश्वं ब्रह्म निरन्तरम्॥" इत्यादीन्यनेकानि पद्यानि व्यलिखत् विश्वमित्यादिमस्य नाम्नो भाष्योक्तेष्वर्थेष्वेकैकं प्रत्येकशो विशदीकर्तुम् एवं बहुत्राप्येपि। विवरणादुपरि प्रासङ्गिकान् विचारानपि क्वचिदकरोत्। यथा विश्वमिति नाम्न एव प्रस्तावे, 'इन्द्रपद्मजशर्वादिनामभिः स्तुतिरस्य हि। विष्णोर्युक्ततरेत्येवं दर्शनायैवमुच्यते॥' इति कारिकया विश्वशब्दस्य प्रथमतो ग्रहणे हेतुमसूचयत्। एवमन्तरान्तरा आक्षेपतत्प्रतिक्षेपसिद्धान्तसमर्थनादिकमपि कारिकाभिरनेनाकारि। अतश्च महानस्ति विस्तरोऽस्य ग्रन्थस्य॥

विबुधवर्यतीर्थेन तु विश्वं विष्णुरित्यारभ्य सर्वप्रहरणायुध इत्यन्तानां नाम्नामेव व्याख्या निरमायि। व्याख्यानमेतत् परिपूर्णं व्याख्यातृकृतेन स्वकारिकाणां विवरणेन विभूषितञ्चोपलभ्यं भवति। तीर्थपादा एते मध्वानुयायिन इत्यतस्सुबोधं व्याख्यानमेतन्न शाङ्करभाष्यानुसारीति। प्रायेणैकैकनाम एकैकेन पद्येनैव व्याकुर्वाणा अप्यमी क्वचिदेकेनानेकनामव्याख्यान्निरवहन्। यथा—

"भूतकृद्भूतभृच्चेति नामभ्यां समुदीरितः।
क्रमेण सर्वजगतां स्रष्टा सर्वस्य पालकः॥" इति।

महाजनानां समक्षताम् नेतुमिष्यमाणमिदमन्यद्विवरणमपि नामसहस्र-मात्रेणाभिसम्बद्धं कारिकारूपञ्च । श्रीशङ्करभगवत्पादभाष्योक्तानर्थानशेषान् सङ्गृह्य क्वचित् क्वचिदन्योक्तानप्याविष्कुरुते च । एकैकं नाम एकैकेनैव पद्येनात्र व्याकृतमिति विवरणपद्यान्यपि नामभिस्समसङ्ख्याकानि । प्रतिज्ञातञ्च विवरणकृता तथैव प्रारम्भे——

"विष्णोर्नामसहस्रस्य भाष्ये योऽर्थः प्रकीर्तितः ।

संगृह्यते स सर्वोऽथ एकैकश्लोकतोऽधुना ।" इति । अर्थान्तराऽनभिधाने भाष्येण गतार्थत्वान्निष्प्रयोजनोऽयं विवरणप्रयास इति तु नाशङ्कनीयम्, सर्वेषां भाष्योक्तार्थानां सततं हृदि धारणसौकर्यार्थत्वात् । गद्यापेक्षया वृत्तबद्धानां हि पाठावृत्तिभिर्दृढतापादने प्रयत्नलाघवं भवतीति । अर्थानां संग्रहे संगृहीत नामनायासप्रतिपत्तिकरैः पदैः प्रतिपादने च व्याख्यातुरस्यान्यादृशं कौशलं विशदीकुर्वन्ति कारिकाः ॥

विवरणस्यास्य प्रणेता क इति प्रश्नस्य सर्वेश्वरतीर्थशिष्यो रघुनाथतीर्थ इत्येतावदेव शक्यमुत्तरं दातुम् । अस्ति केरळेषु 'कूटल्लूर्' इति सुप्रथिते ब्रह्मालये लब्धजन्मभिः कैश्चन वैयाकरणशेखरैः कृतं लघुविवरणमिति प्रौढं गद्यात्मकं सहस्रनामस्तोत्रस्य व्याख्यानम् । तत्र च, 'मार्गो नेयो नयोऽनयः' इत्यस्य विवरणावसरे, मार्गनेयः इत्येकनामेति नेयोनयः इत्येकनामेति च पक्षद्वयमुपन्यस्य, "रघुनाथतीर्थस्तु नयानययोरेकनामत्वमाह" इत्युक्तम् । अत्र च ग्रन्थे तस्मिन्नेव प्रकरणे "अनयोनय इत्येतन्नामैकं सविशेषणम्" इत्याख्यातम् । अतश्शक्यमूहितुं, लघुविवरणकारोक्तो रघुनाथतीर्थ एवास्य कर्तेति । एवं, "वं सर्वेश्वरतीर्थराजममृतप्राप्त्यै सदोपास्महे" इति ग्रन्थस्यास्यारम्भे निबद्धमङ्गलपद्यपादात्, "नमोऽस्तु सर्वेश्वरतीर्थवर्यगुरुभ्य ईशस्य च सम्भवेभ्यः" इत्युपसंहारपद्योपगतोक्तावगम्यते सर्वेश्वरतीर्थशिष्योऽयमिति च ॥

मद्रपट्टिनश्रीमद्रामवर्मसार्वभौमित्रिविद्यामन्दिराबोधिशिरात् प्राक् समासादिता अस्य-मातृका कालिकाक्षरसन्दर्भानरिक्तबोधस्वरूपा दुर्ग्रहार्था चासीदिति

बहुधा प्रयतमानैरप्यनवाप्तमातृकान्तरैर्भाष्यं कथुविवरणमात्रलोचय निपुणविचारैरभ्यूह्यैव सम्भाव्यपाठानवधार्य संशोधिता तत्र तत्र टिप्पणयोजनेन परिष्कृता च सुरक्षिता अवर्तत । सम्प्रार्थितैरेतैः पूज्यपादैः सपरितोषं प्रदत्ता सेयमेकैवास्य प्रसाधने अवलम्बनतां भजते । प्रसाधनावसरे च यद्यावश्यकतया मनसि प्रतिभातम्, तदपि कचन टिप्पणे योजितं भवति । कचिन्मातृकायां दृष्टस्यार्थानवगमात् शोभनप्रकारास्फुरणाच्च यथादृष्टमेव कुण्डलनाधेयोर्मध्ये प्रश्नचिह्नाङ्कितं निविष्टम् । टिप्पणे निवेदिता च पाठस्य शोधनीयता । यथास्थितस्यैवार्थसङ्गतिर्वा, शुद्धः पाठो वा यदि सुधीभिरस्सकरुणमुपदिश्येत, तर्ह्यनन्तरमुद्रणमविकलं कर्तुं शक्येतेति तेषामत्रादरानुग्रहो प्रार्थ्येते । मातृकादृष्टानामघटमानार्थताबुद्ध्या ये चान्यथा पाठाः परिकल्पिता वर्तन्ते, तेषां साधुतापि सुधीभिः परीक्षणीयेति च सप्रश्रयमभ्यर्थ्यते ॥

अन्यत् किञ्चिदपि विज्ञाप्यते विदुषां पुरतः । अस्य षष्ठे दशके 'स्वाभाव्यः' इति नाम्नो व्याख्यानरूपस्य त्रयोविंशतितमस्य पद्यस्योत्तरार्धे 'स्वैरस्वामीत्याभिमुख्येन भावनीय इतीतरे' इति मातृकायां दृष्टम् । अर्थानवगत्या अक्षराधिक्यबुद्ध्या च, 'सु स्वैरमाभिमुख्येन' इति पाठः कल्पितः । तत्र 'स्वै'काराचरमर्षसकारो लिखितः स्यात् । न तु रेफः । स्वैस्स्वामीति पठने अक्षराधिक्यं नास्ति । स्वैः स्वीयैः भक्तैः स्वामीति भावनीय इत्यर्थश्च संगच्छते । एवं पञ्चमशतकोपान्त्यपद्यस्य 'शरीरभूतभूतानाम्' इति मातृकादृष्टे प्रथमपादे, 'शरीरारम्भकभूतानां भरणात्, इति भाष्यानुसारितासम्पादनाय आरम्भकपदपर्यायं मूलपदं घटयित्वा 'शरीरमूलभूतानाम्' इति यः पाठः कल्पितः सोपि नावश्यकः । शरीरभूतानां शरीरात्मना परिणतानां भूतानां पृथिव्यादीनामित्यर्थकतया यथास्थितपाठस्य साधुत्वादिति ॥

यथाशक्तिकृतेऽप्यवधाने सन्त्यत्र कानिचन मुद्रणस्खलितानि समापतितानीति सविषादं सलज्जञ्च वक्तव्यं संवृत्तम् । यथा शुद्धिपत्रमपेक्षितं भवति, तथा स्खलितानां बाहुल्यं नास्ति चेति तन्न योजितम् । यदि कदाचित् पुनरस्य मुद्रापणभागधेयं लभेय, तदा नूनमितोऽधिकं श्रद्दधीयेति प्रतिजाने । सावधानं पाठान्

विशोध्य टिप्पण्या विभूष्य च सुरक्षितस्य स्वहस्तलिखितमातृकाग्रन्थस्य प्रदानेन प्रसाधनकालेपि तत्र तत्र संशयनिवर्तनेन चानुगृह्य प्रसाधकस्य क्लेशं लघूकृतवद्भ्यो निस्तुलवात्सल्यनिधिभ्यश्श्रीमन्महाराजमहाभागेभ्यो धन्यतामात्मनो निवेदयितुमुचितां वाचमलभमानः प्रकामनम्रे शिरसि निबद्धमञ्जलिं केवलमुपहरन् कृतकृत्यमानी वर्ते । यौ च श्रीमन्तौ डि. दामोदरपिषारकः, सि. के. रामपाणिवाद इति पण्डितपरिवृढौ अस्य प्रसाधने सर्वप्रकारमपि साह्यं कृतवन्तौ, ताभ्यां सुहृद्वराभ्यापि कृतज्ञतामावेदयन् महतां पुरतो ग्रन्थमिममवतारयति भगवत्कारुण्यैकशरण्यः

पूर्णवेदपुरी
25-7-1960

सुधीजनविधेयः
के. अच्युतप्पोतुवाळ्

# श्रीविष्णुसहस्रनामस्तोत्रम्

## [श्रीनामकारिकासहस्रसहितम्]

### प्रथमशतकम्

मूलम्— *विश्वं विष्णुर्वषट्कारो भूतभव्यभवत्प्रभुः ।
भूतकृद्भूतभृद्भावो भूतात्मा भूतभावनः ॥ १ ॥

---

विवरणम्— यत्पादाम्बु निपीय शुद्धमतयस्सन्त्यज्य सर्वक्रिया-
स्सत्यज्ञानसुखात्मकं परमहं ब्रह्मास्मि नान्यत्ततः ।
निश्चित्येति दुरन्तसंसृतिमहासिन्धुं तरन्ति प्रजा-
स्तं सर्वेश्वरतीर्थराजममृतप्राप्त्यै सदोपास्महे ॥

विष्णोर्नामसहस्रस्य भाष्ये योऽर्थः प्रकीर्तितः ।
सङ्गृह्यते स सर्वोऽर्थ एकैकश्लोकतोऽधुना ॥

---

* भूः पादौ यस्य नाभिर्वियदसुरनिलश्चन्द्रसूर्यौ च नेत्रे
कर्णावाशाश्शिरो द्यौर्मुखमपि दहनो यस्य वास्तेयमब्धिः ।
अन्तस्स्थं यस्य विश्वं सुरनरखगगोभोगिगन्धर्वदैत्यै-
श्चित्रं रंरम्यते तं त्रिभुवनवपुषं विष्णुमीशं नमामि ॥

शान्ताकारं भुजगशयनं पद्मनाभं सुरेशं
विश्वाकारं गगनसदृशं मेघवर्णं शुभाङ्गम् ।
लक्ष्मीकान्तं कमलनयनं योगिहृद्ध्यानगम्यं
वन्दे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥

क्षीरोदन्वत्प्रदेशे शुचिमणिविलसत्सैकते मौक्तिकानां
मालाक्लृप्तासनस्थः स्फटिकमणिनिभैर्मौक्तिकैर्मण्डिताङ्गः ।
शुभ्रैरभ्रैरदभ्रैरुपरिविरचितैर्मुक्तपीयूषवर्षै-
रानन्दी नः पुनीयादरिनलिनगदाशङ्खपाणिर्मुकुन्दः ॥

एवमेतच्छ्लोकत्रयं सहस्रनामध्यानश्लोकतया सन्तः पठन्ति । इत्युक्तं लघुविवरणे अस्य सहस्रनाम-
मालामन्त्रस्य ऋष्यादयोऽपि महाभारतोक्तास्तत्र प्रदर्शिताः ॥

ऋषिर्नाम्नां सहस्रस्य वेदव्यासो महामुनिः ।
छन्दोऽनुष्टुप्तथा देवो भगवान्देवकीसुतः ॥

वि— विश्वं विश्वस्य हेतुर्वा ब्रह्मोङ्कारश्च वा जगत् ।
[1]तत्सृष्ट्वा तत्प्रविष्टो वा विश्वस्यास्मिन् लयेन वा ॥ १ ॥

[2]विष्णुर्व्यापनशीलत्वात्स्वकान्तिव्याप्तितोऽथवा ।
रोदस्योः क्रमणाद्वापि यद्वा सृष्ट्वा प्रवेशनात् ॥ २ ॥

[3]वषट्क्रियोद्देश्यतया तदाधारतयाथवा ।
तादात्म्याद्वा वषट्कारो देवतामन्त्रभावतः ॥ ३ ॥

भूतं यच्च भवद्यच्च भविष्यदपि यद्भवेत् ।
ईशत्वात्तस्य सर्वस्य भूतभव्यभवत्प्रभुः ॥ ४ ॥

रजोधिष्ठाय भूतानि करोति ब्रह्मरूपतः ।
भूतकृद्रुद्ररूपी वा तमोधिष्ठाय कृन्तति ॥ ५ ॥

गुणं सत्त्वमधिष्ठाय भूतानां पालनाद्विभुः ।
धारणात्पोषणाद्वापि भूतभृत्परिकीर्तितः ॥ ६ ॥

जगद्रूपेण भवति केवलो भवतीति वा ।
सत्तात्मकतया वापि भाव इत्युच्यते बुधैः ॥ ७ ॥

ब्रह्मादिस्थावरान्तेषु भूतेष्वयमवस्थितः ।
अन्तर्यामितया यस्मात् भूतात्मा समुदाहृतः ॥ ८ ॥

जननाद्वर्धनाद्वापि भूतानां भूतभावनः ।
प्रकीर्तितः "स दाधार पृथिवीं द्या"मिति श्रुतेः ॥ ९ ॥

---

अमृतांशूद्भवो बीजं शक्तिर्देवकिनन्दनः ।
त्रिसामा हृदयन्तस्य शान्त्यर्थे विनियोजयेत् ॥

इति । देवो देवता । अमृतांशूद्भव इति नामबीजम् । देवकिनन्दन इति नामशक्तिः । त्रिसामेतिनाम तस्य हृदयम् । शान्त्यर्थे मोक्षार्थे ।

१ विशेः कर्तर्यधिकरणे च औणादिकक्वन्प्रत्ययात्तृतीयचतुर्थपादोक्तार्थयोः क्रमेण लाभः । पक्षयोरेतयोः "विश्वाय" इति च पूजाविनियोगार्हश्चतुर्थ्यन्तम् ।

२ विषेर्व्याप्त्यर्थकाद्, विशतेर्वा नुक्प्रत्यये इदं रूपमिति भाष्ये । विषेः किच्चेति नुप्रत्यये विशेर्बाहुळकादौणादिके ष्णुप्रत्यये वा विष्णुरिति रूपमिति लघुविवरणे ॥

३ सम्प्रदाने अधिकरणे च घञिति प्रथमद्वितीयपादोक्तार्थयोर्यथाक्रमं लाभ इति लघुविवरणे उक्तम् ।

पूतात्मा परमात्मा च मुक्तानाम्परमागतिः ।
अव्ययः पुरुषस्साक्षी क्षेत्रज्ञोक्षर एव च ॥ २ ॥

योगो योगविदान्नेता प्रधानपुरुषेश्वरः ।
नारसिंहवपुश्श्रीमान्केशवः पुरुषोत्तमः ॥ ३ ॥

---

वि—गुणोपरागस्स्वेच्छातः पुरुषस्येति कल्प्यते ।
"केवलो निर्गुणश्चे"ति शास्त्रात्पूतात्मनामकः ॥ १० ॥

कार्यकारणरूपाभ्यां विलक्षणतया परः ।
नित्यात्मकतया चात्मा परमात्मा ततो हरिः ॥ ११ ॥

मुक्तानां परमोत्कृष्टा गतिर्गन्तव्यदेवता ।
पुनरावृत्यभावेन मुक्तानाम्परमागतिः ॥ १२ ॥

अस्य व्ययो विकारो वा विनाशो वा न विद्यते ।
"अजरोऽमर" इत्यादिश्रुतेः अव्ययनामता ॥ १३ ॥

पुरुषः[1] पूर्वभवनात् पूर्णत्वाच्छयनात्पुरे ।
पुरोर्दानाद्[2]धान्तकृतेः[3] पूरयित्वा सदेस्तु[4] वा ॥ १४ ॥

साक्षादव्यवधानेन स्वरूपेणैव पश्यति ।
"साक्षाद्द्रष्टरि संज्ञायां" स्मरणात्साक्षिसंज्ञितः ॥ १५ ॥

क्षेत्रज्ञो नाम जीवात्माश्नो[5]त्यश्नाति वा क्षरः ।
ईशोऽभेदात्तयोः प्रोक्तः क्षेत्रज्ञोऽक्षरएव च ॥ १६ ॥

एकत्वभावना योगः क्षेत्रज्ञपरमात्मनोः ।
तदवाप्यतया योगः इदं रूपं युजे[6]र्घञि ॥ १७ ॥

---

१ अस्तेर्व्यत्यस्ताक्षरयोगात् आसीत्पुरा पूर्वमेवेति विग्रहं कृत्वा साधितोयमर्थो भाष्ये ।

२ पुरोः महतः फलस्य दानादित्यर्थः । पुरूणि फलानि सनोति ददातीति व्युत्पत्या एतदर्थलाभः ॥

३ पुरूणि भुवनानि संहारसमये स्यति नाशयतीत्यन्तकृतिलाभः ।

४ सदेः सहनात् । सर्वभूतेष्वित्यर्थोतिसिद्ध्यति ।

५ अश्नोति व्याप्नोति अश्नाति आत्ति जगत् । क्षेत्रज्ञोक्षर इति नामद्वयं केचिन्मन्यन्ते ।

६ 'युजेथवा' इति मातृकायान्दृश्यन्ते ।

सर्वः शर्वः शिवः स्थाणुः भूतादिर्निधिरव्ययः ।
सम्भवो भावनो भर्ता प्रभवः प्रभुरीश्वरः ॥ ४ ॥

---

वि—योगं विदन्तीति योगविदस्तेषान्नयत्ययम् ।
योगक्षेमं ततो योगविदान्नेतेत्युदीरितः ॥ १८ ॥

प्रधानं प्रकृतिर्माया जीवः पुरुष उच्यते ।
एतयोरीश्वरो विष्णुः प्रधानपुरुषेश्वरः ॥ १९ ॥

नृसिंहयोरवयवा लक्ष्यन्ते यत्र, तद्वपुः ।
नारसिंहं, तदस्येति नारसिंहवपुर्हरिः ॥ २० ॥

श्रीमान् वक्षसि [1]नित्यं श्रीर्वसत्यस्य ततो हरिः ।
नृसिंहत्वेपि नैवास्य शोभाक्षतिरितीतरे ॥ २१ ॥

[2]केशानामाभिरूप्याद्वा केशवः [3]केशिनो वधात् ।
[4]मूर्तित्रयाधिपत्याद्वा [5]द्वयोर्वा जनकत्वतः ॥ २२ ॥

कूटस्थभूतसञ्ज्ञाभ्यां पुरुषाभ्यां स उत्तमः ।
अथवा पुरुषाणाञ्च श्रेष्ठत्वात् पुरुषोत्तमः ॥ २३ ॥

असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ।
यद्वा सर्वस्य विज्ञानाद्धरिः सर्व इतीरितः ॥ २४ ॥

प्रजासंहारसमये [6]शृणातीत्यथवाऽसुरान् ।
भक्तानां पापमिति वा शर्वशब्दो निपातितः ॥ २५ ॥

---

१ नित्ययोगे मतुबिति भावः ।

२ केशशब्दात्प्रशंसायां वप्रत्ययः ।

३ केशिनं हतवानिति केशवः । वध हिंसायामिति काशिकोक्तो धातुः । इकारस्यात्वं धकारलोपश्च पृषोदरादित्वात् ।

४ कश्च अश्च ईशश्च केशाः त्रिमूर्तयः । ते यस्य वशे सः । अत्र शकारलोपोपि पृषोदरादित्वात् ।

५ कश्च ईशश्च केशौ । ताववतीति ।

६ शृणाति संहरति ।

वि—निस्त्रैगुण्यतया विष्णुः शुद्धत्वाच्छिव उच्यते ।
शिवनामानि चाप्यस्मिन् "स ब्रह्मा स शिव"इश्रुतेः ॥ २६ ॥

स्थिरत्वात् स्थेणुरित्येतत्सूत्रेणैव तु सिद्धतेः ।
णुपत्ययान्तादेवास्मिन् स्थाणुशब्दः प्रकीर्तितः ॥ २७ ॥

भूतानाङ्कारणत्वेन भूतादिरिति कीर्तितः ।
स्पृहणीयतया भूतैरादीयत इतीतरे ॥ २८ ॥

प्रळये समनुप्राप्ते सर्वमस्मिन्निधीयते ।
अनश्वरश्च भगवान् स तस्मात् निधिरव्ययः[1] ॥ २९ ॥

धर्मसंस्थापनार्थाय मत्स्यकूर्मादिरूपतः ।
स्वेच्छयास्य समीचीनं भवनं तेन सम्भवः ॥ ३० ॥

सर्वेषामपि भोक्तृणां फलं यद्भावयत्यतः ।
भावनोऽयं "फलमत"[2] इति सूत्राद्विनिश्चितः ॥ ३१ ॥

भर्ता प्रपञ्चभरणादधिष्ठानतया हरिः ।
आत्मदानादिभिर्वा "य आत्मदा बलदा"श्रुतेः ॥ ३२ ॥

प्रकर्षेण महाभूतान्यस्माज्जायन्त इत्यतः ।
प्रकृष्टोऽस्य भवो जन्म स्थिति वा प्रभवः स्मृतः ॥ ३३ ॥

लोके या याः क्रियास्सन्ति तासु तासु च सर्वशः ।
सामर्थ्यातिशयाद्धेतोः प्रभुर्विष्णुः प्रकीर्तितः ॥ ३४ ॥

निरुपाधिकमैश्वर्यमस्यास्तीत्यत ईश्वरः ।
"एष सर्वेश्वर" इति श्रुतेरवगतो हरिः ॥ ३५ ॥

एषामुपरि भावाद्वा भवनात्स्वयमेव वा ।
स्वतन्त्रभावादपि वा स्वयम्भूः परिकीर्तितः ॥ ३६ ॥

---

१ अव्ययपदस्य विशेषणवाचित्वेपि निधयेऽव्ययायेत्येव पूजोपयोगि चतुर्थ्यन्तत् । नत्वव्ययाय निधय इतीति लघुविवरणे उक्तम् ।

२ फलमत उपपत्तेरिति शारीरकं सूत्रम् ।

स्वयम्भूश्शम्भुरादित्यः पुष्कराक्षो महास्वनः ।
अनादिनिधनो धाता विधाता धातुरुत्तमः ॥ ५ ॥

अप्रमेयो हृषीकेशः पद्मनाभोऽमरप्रभुः ।
विश्वकर्मा मनुस्त्वष्टा स्थविष्ठः स्थविरो ध्रुवः ॥ ६ ॥

---

वि—भक्तानामनुरक्तानां शं सुखं भावयत्यतः ।
शम्भुर्भवति "विश्वाक्षं विश्वशम्भुव"मित्यतः ॥ ३७ ॥

अखण्डितभुवस्वाम्यात्पुत्रत्वाद्वाऽदितेर्हरिः ।
सर्वोपाधिस्थितेस्साम्याद्वाऽऽदित्यो मण्डलस्थितेः ॥ ३८ ॥

पुष्कराक्षः पुष्करेणोऽपमिते अक्षिणी यतः ।
अस्य तस्मात् "तस्य यथा कप्यास"मिति वाक्यतः ॥ ३९ ॥

महान् सम्पूजितो नादश्शब्दो वा श्रुतिलक्षणः ।
भूतस्य महतो यस्य सोऽयं प्रोक्तो महास्वनः ॥ ४० ॥

जन्मादिर्निधनश्चान्तस्तद्द्वयं यस्य नास्ति सः ।
अनादिनिधनः प्रोक्तो"ऽनाद्यनन्त"मिति श्रुतेः ॥ ४१ ॥

धाता विश्वस्य भरणादनन्तादिस्वरूपतः ।
धाता गर्भं दधातीति विरिञ्चस्य इतीतरे ॥ ४२ ॥

विधाता कर्मणां कर्ता तत्फलानामथापि वा ।
धारकानप्यनन्तादीन् विशेषेण दधाति वा ॥ ४३ ॥

धातुर्विरिञ्चादुत्कृष्टश्चिद्रूप इति वोत्तमः ।
चिदेव धारणाद् धातुः यद्वा नाम्नोरिदन्द्वयम् ॥ ४४ ॥

शब्दादिव्याप्त्यसादृश्यनिमित्तादेरभावतः ।
साक्षित्वेन प्रमाणादेरप्रमेय इति स्मृतः ॥ ४५ ॥

---

१ आदितिशब्दो महीपर्यायतया श्रुतौ प्रसिद्धः ।

२ यथा आदित्य एक एवानेकेषु जलभाजनेष्वनेकवत्प्रतिभासते एवमनेकेषु शरीरेषु एक एवात्मा अनेकवत्प्रतिभासत इत्यादित्यसाधर्म्यादित्यर्थः ।

३ हिरण्मयपुरुषात्मना आदित्यमण्डलान्तस्थत्वात् ।

४ शब्दस्पर्शरूपाद्यभावान्न प्रत्यक्षः । व्याप्त्यभावान्नानुमानगम्यः । सादृश्याभावान्नोपमानसिद्धः । प्रवृत्तिनिमित्ताभावान्न शब्दवाच्यः । आदिपदगृहीतार्थापत्त्यादिनाप्यसिद्ध इत्यर्थः ।

अग्राह्यः शाश्वतः कृष्णो लोहिताक्षः प्रतर्दनः ।
प्रभूतस्त्रिककुब्धाम पवित्रं मङ्गलं परम् ॥ ७ ॥

---

वि—हृषीकाणामिन्द्रियाणामीशो जीवः परोऽथवा ।
हृष्टाः केशा रश्मयोऽस्य सूर्यचन्द्रात्मनोऽथवा (हृषीकेशः) ॥ ४६ ॥

कारणञ्जगतां पद्ममस्य नाभावितीश्वरः ।
पद्मनाभो "ऽजस्य नाभावध्येक"मिति वाक्यतः ॥ ४७ ॥

सर्वेषाममराणां यद्देवानां प्रभुरीश्वरः ।
अमरप्रभुरित्येतन्नामतो विद्यते हरौ ॥ ४८ ॥

विश्वकर्मा विश्वमस्य कर्म[1] कार्यं क्रियाथवा ।
विचित्रशक्तिमत्त्वेन त्वष्टुस्सादृश्यतोऽथवा ॥ ४९ ॥

मननान्मनुरित्युक्तो "नान्योऽतोस्ति[2]" श्रुतेर्हरिः ।
मनुः प्रजापतिर्वाथ मन्त्रो वा मनुरुच्यते ॥ ५० ॥

तनूकरोति भूतानि संहारसमये यतः ।
अतस्त्वष्टा रूपमिदं तृजन्तस्य तु तक्षतेः ॥ ५१ ॥

स्थविष्ठोऽतिशयस्थौल्यं[3] स्थूलानामपि यत्ततः ।
स्थूलप्रपञ्चविस्तारस्वामित्वादिति चापरे ॥ ५२ ॥

वयोवृद्धः पुराणो वा स्थविरोथ ध्रुवः स्थिरः ।
स्थविरो ध्रुव इत्येतन्नामैकं[4] सविशेषणम् ॥ ५३ ॥

अग्राह्यो गृह्यते नैव कर्मणामिन्द्रियैरपि[5] ।
मृदादिवत्कुलालाद्यैः "न तस्येश" इति श्रुतेः ॥ ५४ ॥

---

१ कर्मपदेन कृञः कर्मणि मनिन्प्रत्ययान्तेन कार्यमिति, भावे तादृशप्रत्ययान्तेन क्रियेति च लभ्यते ।

२ "नान्योऽतोऽस्ति मन्ता" इति श्रुतिः ।

३ स्थौल्यादिति मातृकायान्दृश्यते ॥

४ नामद्वयं केचिन्मन्यन्त इति लघुविवरणकृतः ।

५ कर्मेन्द्रियैर्वागादिभिरित्यर्थः । अपिना मनसो ग्रहणम् ।

वि—शश्वत्सर्वेषु कालेषु शाश्वतो भवतीत्यतः ।
"शाश्वतं शिव"मित्यादिर्मन्त्रवर्णोत्र दृश्यते ॥ ५५ ॥

कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः ।
तद्भावयोगात् कृष्णोसौ कृष्णवर्णात्तथाथवा ॥ ५६ ॥

लोहिते पद्मगर्भाभे अक्षिणी यस्य सोच्युतः ।
"[1]समावृषभ" इत्यादेः लोहिताक्ष इति स्मृतः ॥ ५७ ॥

प्रळये सर्वभूतानि हिनस्तीति प्रतर्दनः ।
"[2]अत्ता चराचरे"त्यादेः "[3]यस्य ब्रह्म च" मन्त्रतः ॥ ५८ ॥

सम्पन्नोयं सर्वशक्तिज्ञानैश्वर्यादिभिर्गुणैः ।
प्रभूतः सर्वनाशेपि समृद्धोऽयमितीतरे ॥ ५९ ॥

ऊर्ध्वाधोमध्यभागेन तिसृणां ककुभामपि ।
धामेति त्रिककुब्धाम [4]नाम त्वेकमिदम्पदम् ॥ ६० ॥

पुनाति येन तपसा देवादीन्यः पुनाति वा ।
तत् पवित्रं "[5]पुवो धातोस्संज्ञायां कर्तरी"त्यतः ॥ ६१ ॥

अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।
स्मृतिमात्रात् [6]मङ्गळं तत्कल्याणात्मतयाथवा ॥ ६२ ॥

सर्वभूतेभ्य उत्कर्षो [7]यस्मादस्मिन्भवत्यतः ।
[8]परं प्रोक्तं "परं ब्रह्म" "परन्धामे"ति च श्रुतेः ॥ ६३ ॥

---

१ "समावृषभो लोहिताक्षः" ।

२ "अत्ता चराचरग्रहणात्" इति ब्रह्मसूत्रम् ।

३ "यस्य ब्रह्म च क्षत्रञ्च उभे भवत ओदनः" इति श्रुतिः ।

४ नामद्वयमन्ये मन्यन्ते ।

५ "पुवस्संज्ञायाम्". "कर्तरि चर्षिदेवतयोः" इति पाणिनिसूत्राभ्यां करणे कर्तरि च इत्रस्य विधानादुक्तार्थयोर्लाभ इति भावः । सूत्रे पुव इति पूङ्पूञोर्ग्रहणम् । येन पुनाति यो वा पुनाति, ऋषिर्देवता वा इति भाष्यम् ।

६, ८ मङ्गळम्परमित्येकन्नाम सविशेषणमिति भाष्यकृतः ।

७ धर्मादस्मिन्निति मातृकापाठः ।

ईशानः प्राणदः प्राणो ज्येष्ठः श्रेष्ठः प्रजापतिः ।
हिरण्यगर्भो भूगर्भो माधवो मधुसूदनः ॥८॥

---

वि—अस्मिन्यतो नियन्तृत्वं सर्वभूतानि च प्रति ।
असावीशान इत्येतत्सर्ववेदविदाम्मतम् ॥६४॥

प्राणानाश्वेष्टनाद्दानाद[1]वखण्डनतोपि वा ।
[2]दापनाच्छोधनाद्वापि प्राणदः परिकीर्तितः ॥६५॥

प्राणितेः प्राणशब्दोसौ निष्पन्नश्चेष्टनार्थकात् ।
क्षेत्रज्ञे वा परे मुख्ये प्राणे वा सर्वथा हरौ ॥६६॥

"ज्यचा" धिकारे "वृद्धस्य चेति" ज्यादेशदर्शनात् ।
वृद्धेष्वतिशयेनैष वृद्धत्वाज्ज्येष्ठ उच्यते ॥६७॥

मुख्ये प्राणे श्रेष्ठशब्दः प्रशस्यतमवाचकः ।
सर्वकारणभूते वा सर्वथा वर्तते हरौ ॥६८॥

प्रजानामाधिपत्यात्स श्रेष्ठत्वेन प्रजापतिः ।
प्रजानां नित्यसूरीणामाधिपत्यादितीतरे ॥६९॥

हिरण्मयस्य खण्डस्य मध्यवर्तितया हरिः ।
हिरण्यगर्भो विख्यातो विरिञ्चात्मतयाथवा ॥७०॥

भूर्गर्भे यस्य भूगर्भो भूर्दिव्यमहिषी हरेः ।
भरणीयतया गर्भभूता सेतीतरेऽब्रुवन् ॥७१॥

मायाश्श्रियः पतित्वाद्वा मधुविद्यावबोधनात् ।
मौनाद्ध्यानाच्च योगाच्च माधवः परिकीर्तितः ॥७२॥

मधुनाम्नोऽसुरस्यायं सूदनात्पुरुषोत्तमः ।
मधुसूदनशब्देन विद्वद्भिः परिपठ्यते ॥७३॥

---

१ प्राणान् द्यति कालात्मना खण्डयतीति प्राणदः ।
२ प्राणान् दाति लुनातीति प्राणदः ।
३ प्राणान् दापयति शोधयतीति व्युत्पत्तिः । दैप् शोधन इति धातुः ॥

ईश्वरो विक्रमी धन्वी मेधावी विक्रमः क्रमः ।
अनुत्तमो दुराधर्षः कृतज्ञः कृतिरात्मवान् ॥९॥

वि—सर्वशक्तिसमायोगाद् ईश्वरः परिकीर्तितः ।
अणिमादिभिरष्टाभिरैश्वर्यैर्योगतोऽथवा ॥ ७४ ॥

विक्रमो नाम शौर्यं हि तदस्यास्तीति योगतः ।
विक्रमीति हरेर्नाम विद्वद्भिः परिपठ्यते ॥ ७५ ॥

व्रीह्यादिकाद्धन्वशब्दान्मत्वर्थीय इनावयम् ।
धन्वीशब्दो हरौ स्मृत्या "रामश्शस्त्रभृता"मिति ॥ ७६ ॥

सामर्थ्यमुच्यते मेधा बहुग्रन्थार्थधारणे ।
मेधावीत्येष तद्योगाद् "अस्माये"[1]ति विनौ स्मृतः ॥ ७७ ॥

विशेषात्क्रममाणो वा विना[2] क्रामन्नथापि वा ।
विश्वं विक्रममाणो वा क्रमाद्वा विक्रमो हरिः ॥ ७८ ॥

क्रमणात् क्रमहेतुत्वात् "क्रान्तो विष्णु"रिति स्मृतेः ।
विभूत्या नित्यया विश्वं क्रामन् क्रम इतीतरे ॥ ७९ ॥

"अस्मात्परन्ने"ति मन्त्रादुत्तमो नास्य विद्यते ।
तस्मादनुत्तम इति भगवान्परिकीर्तितः ॥ ८० ॥

दुराधर्षोऽभिधर्षायं नाभिभाव्यः परैरिति ।
खल्प्रत्ययान्तोऽयमीषद्दुस्सुष्विति च सूत्रतः ॥ ८१ ॥

कृतज्ञः प्राणिकर्माणि जानातीति कृतान्यम् ।
मोक्षदो वा पत्रपुष्पाद्यल्पं वापि प्रयच्छते ॥ ८२ ॥

कृतिः पुरुषयत्नो, वा क्रिया, सर्वात्मकत्वतः ।
तदाधारतया कृत्या लक्ष्यते वेत्यसौ कृतिः ॥ ८३ ॥

१ "अस्मायामेधास्रजो विनि"रिति विनिप्रत्ययः ।
२ विना पक्षिणा गरुडेन ।

सुरेशः शरणं शर्म विश्वरेताः प्रजाभवः ।
अहः संवत्सरो व्यालः प्रत्ययः सर्वदर्शनः ॥ १० ॥

---

वि—आत्मवान् कीर्तितो यस्मात्स्वे महिम्नि प्रतिष्ठितः ।
दासाः कर्तार आत्मानस्सन्त्यस्येत्यपरे जगुः ॥ ८४ ॥

ब्रह्मरुद्रादिदेवानां संविधातृतया हरिः ।
सुरेशः त्व"हमादिर्हि देवाना"मिति च स्मृतेः ॥ ८५ ॥

आर्तानामार्तिहरणात् शरणं ब्रह्म संवृतम् ।
"शरण्यं शरणञ्च त्वामाहुर्दिव्या" इति स्मृतेः ॥ ८६ ॥

परमानन्दरूपत्वात् शर्मेत्यपि च संस्मृतम् ।
"आनन्दो ब्रह्म" वचनात्परमानन्दरूपता ॥ ८७ ॥

विश्वस्य कारणत्वेन विश्वरेताः प्रकीर्तितः ।
"एतस्माज्जायते प्राणो मन" इत्यादिमन्त्रतः ॥ ८८ ॥

प्रजाभवः प्रजा अस्मात्प्रभवन्ति यतस्ततः ।
"यतः प्रसूता जगत" इति वेदान्तवाक्यतः ॥ ८९ ॥

अह इत्युच्यते सद्भिः प्रकाशात्मतया हरिः ।
न प्रजास्वाश्रिता हन्तीत्यहरित्यपरेऽब्रुवन् ॥ ९० ॥

कालात्मनाऽवस्थितोसौ विष्णुः संवत्सरः स्मृतः ।
संरक्षणाय साधूनां वसतीत्यपरेऽब्रुवन् ॥ ९१ ॥

व्यालोऽशक्यग्रहो दुष्टमत्तेभवदसौ हरिः ।
भक्तान्विशेषेण लाति स्वात्मसात्कुरुतेऽपरे ॥ ९२ ॥

प्रतीतिः प्रत्ययः प्रज्ञा "प्रज्ञानं ब्रह्म" वाक्यतः ।
प्रत्याययति तान् भक्तान् स विस्रम्भयतीतरे ॥ ९३ ॥

सर्वं दर्शनमेतस्य लोचनं सर्वदर्शनः ।
"विश्वतश्चक्षु"रित्यादेः "विश्वाक्ष"मिति च श्रुतेः ॥ ९४ ॥

अजः सर्वेश्वरः सिद्धः सिद्धिः सर्वादिरच्युतः ।

वि—अजो न जायते मन्त्रात् "न जातो न जनिष्यते" ।
स्वप्राप्तिविघ्नान्भक्तानां क्षिपतीतीतरेऽब्रुवन् ॥ ९५ ॥

ईश्वराणाञ्च[1] सर्वेषां स्वाम्यात्सर्वेश्वरः स्मृतः ।
स्वाश्रितानाश्नुते सर्वान् सर्वेश्वर इतीतरे ॥ ९६ ॥

नित्यनिष्पन्नरूपत्वादयं सिद्ध इति स्मृतः ।
अन्ये तु नित्यसिद्धानां स्वरूपेणेति चक्षते ॥ ९७ ॥

सर्वसंवित्स्वरूपत्वात् सिद्धिरित्युच्यते हरिः ।
फलं निरस्तातिशयं यत्तद्रूपतयाऽथवा ॥ ९८ ॥

कारणत्वेन सर्वेषां सर्वादिरिति संस्मृतः ।
सर्वस्य पुरुषार्थस्य हेतुरित्यपरेऽब्रुवन् ॥ ॥ ९९ ॥

यस्य स्वरूपात्[2]सामर्थ्यान्न[3] च्युतश्च्योष्यतेऽथवा ।
सोऽच्युतः प्रोच्यते श्रुत्या "शाश्वतं शिवमच्युतम्" ॥ १०० ॥

इति श्रीनामकारिकासहस्रे प्रथमशतकं सम्पूर्णम् ।



१ शूराणामिति क्वचित्पाठो दृश्यते ।
२ स्वरूपसामर्थ्यान्न च्युतो न च्यवते न च्यविष्यत इत्यच्युत इति भाष्यम् ।
३ न च इति क्वचित् ।

# द्वितीयशतकम्

मू—वृषाकपिरमेयात्मा सर्वयोगविनिस्सृतः ॥ ११ ॥

वसुर्वसुमनाः सत्यः समात्मा सम्मितः समः ।
अमोघः पुण्डरीकाक्षो वृषकर्मा वृषाकृतिः ॥ १२ ॥

---

वि—वृषान् कामान् वर्षतीति धर्मः, कात्सलिलान्महीम् ।
पातीति कपिरित्युक्तो वराहश्च[1], वृषाकपिः ॥ १०१ ॥

मातुं परिच्छेत्तुमियानित्यात्मा नैव शक्यते ।
अस्येति वासुदेवोयम् अमेयात्मेत्युदाहृतः ॥ १०२ ॥

नानाशास्त्रोक्तयोगाद्विनिस्सृतोऽपगतोऽथवा ।
विनिस्सृतस्सर्वबन्धात् सर्वयोगविनिस्सृतः ॥ १०३ ॥

[2]वसतीति वसुः ज्ञेयो वसूनां पालकोऽथवा ।
साधवो, वशिनः, शान्ता एतेषु वसतीतरे ॥ १०४ ॥

[3]रागद्वेषादिराहित्यं मनःप्राशस्त्यमुच्यते ।
मनःप्राशस्त्यमस्येति हरिः वसुमनाः स्मृतः ॥ १०५ ॥

[4]अवैतथ्यात्परः सत्यः मूर्तामूर्ततयाऽथवा ।
प्राणान्नादित्यभावाद्वा सत्सु साधुतयाऽथवा ॥ १०६ ॥

समो भूतेष्वेक आत्मा समात्मेति स्मृतोऽथवा ।
सम आत्मा मनो यस्य रागद्वेषाद्यदूषितः ॥ १०७ ॥

सर्वैरप्यपरिच्छिन्न इत्यसम्मित उच्यते ।
"ऊनषोडशवर्षोय"मित्याद्यैः सम्मितोऽपरे ॥ १०८ ॥

---

१ वृषरूपत्वात् कपिरूपत्वाच्च वृषाकपिरिति भाष्यम् ।
२ सर्वं जगदस्मिन्, अयमपि तस्मिन् ।
३ वसुशब्देन धनवाचिना प्राशस्त्यं लक्ष्यते । प्रशस्तं मनो यस्य स वसुमना इति भाष्यम् ।
४ प्रमाणभूताः श्रुतयो भाष्ये दर्शिताः ।

रुद्रो बहुशिरा बभ्रुः विश्वयोनिः शुचिश्रवाः ।
अमृतः शाश्वतः स्थाणुः वरारोहो महातपाः ॥ १३ ॥

वि—मया लक्ष्म्या समेतो वा विकाररहितोऽथवा ।
समः परिचर्याभावेऽप्यसावित्यपरेऽब्रुवन्[1] ॥ १०९ ॥

स्मृतः स्तुतः पूजितो वा ददात्येव च तत्फलम् ।
न करोति वृथाऽमोघः सत्यसङ्कल्पतोऽथवा[2] ॥ ११० ॥

हृदयस्थं पुण्डरीकमश्नुतेऽत्रोपलक्ष्यते ।
पुण्डरीकनिभाक्षो वा पुण्डरीकाक्ष उच्यते ॥ १११ ॥

धर्मात्मकं कर्म यस्य वृषकर्माऽत्र च स्मृतिः ।
"सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्यां व्यपोहति" ॥ ११२ ॥

आकृतिर्यस्य धर्मार्थं कीर्तितस्स वृषाकृतिः ।
"रामो विग्रहवान्धर्म" इत्यादिषु च दर्शनात् ॥ ११३ ॥

रुद्दुःखं दुःखहेतुर्वा तां विद्रावयतीत्यतः[3] ।
रुद्रः संहारसमये प्रजा रोदयतीति[4] वा ॥ ११४ ॥

बहून्यस्य शिरांसीति हरिः बहुशिराः स्मृतः ।
"सहस्रशीर्षा पुरुषस्सहस्राक्ष" इति श्रुतेः ॥ ११५ ॥

लोकान्बिभर्तीति बभ्रुः भूमिमित्यपरेऽब्रुवन् ।
"योनन्तः पृथिवीन्धत्त" इत्याद्यत्र निदर्शनम् ॥ ११६ ॥

विश्वस्य कारणत्वेन विश्वयोनिरिति स्मृतः ।
"यतस्सर्वाणि भूतानि भवन्ती"त्यादिशास्त्रतः ॥ ११७ ॥

---

१ परिचयो भावे, इति मातृकायान्दृश्यते ।

२ सन्धत्वतोऽथवा, इति मातृकायान्दृश्यते । सङ्कल्पत, इति तु भाष्यानुसारि ।

३ तद्विद्रावयतीत्यादर्शे दृश्यते—

रुदेस्सम्पदादित्वात् क्विपि रुदिति रूपं दुःखार्थकम् । रुदं सुरारीणां राति ददातीति वा, रुदो भावे करणे वा सम्पदादिक्विपि रुद्दुःखं दुःखहेतुर्वा, तां द्रावयति भक्तानामिति वा रुद्र इति लघुविवरणे ।

४ अश्रुविमोचनार्थकाद्रोदेर्ण्यन्ताद्वा निष्पन्नं रुद्रपदमिति भावः ।

सर्वगः सर्वविद्भानुः विष्वक्सेनो जनार्दनः ।
वेदो वेदविदव्यङ्गो वेदाङ्गो वेदवित्कविः ॥ १४ ॥

---

वि—यस्य श्रवांसि नामानि शुचीनि स शुचिश्रवाः ।
शुचीनि श्रवणीयानि शृणोतीत्यपरेऽब्रुवन् ॥ ११८ ॥

न विद्यते मृतिर्यस्य सोऽमृतः[1] परिकीर्तितः ।
स्वेषामनन्तमाधुर्यात्तृप्तिदत्वादितीतरे ॥ ११९ ॥

स्थाणुश्च शाश्वतश्चासौ शाश्वतस्थाणुरुच्यते[2] ।
नित्यश्चानपहार्योऽसौ गोप्यश्चेत्यपरेऽब्रुवन् ॥ १२० ॥

आरोहोऽङ्गो वरो यस्य स वरारोह उच्यते ।
वरमारोहणं यस्मिन् स वा "यम्प्राप्य न"[3] स्मृतेः ॥ १२१ ॥

महद्यत्तुज्यविषयं ज्ञानमस्य महातपाः ।
महान्प्रतापोऽवैश्वर्यं यस्य वा स महातपाः ॥ १२२ ॥

कारणत्वेन सर्वत्र व्याप्तिमत्त्वात्स सर्वगः ।
"येनावृतं खञ्च दिवं महीचे"ति निदर्शनम् ॥ १२३ ॥

सर्वविद्भानुरखिलं वेत्ति वा विन्दतेऽथवा ।
सर्वत्र[4] भातीति च "तमेव भान्तमनु"श्रुतेः ॥ १२४ ॥

विष्वक्सेनः स यद्भीत्या सेना विष्वग्द्रवत्यरेः ।
विशेषादञ्चति स्वानां सेनां यैस्स इतीतरे ॥ १२५ ॥

नरकं गमयत्येष दुर्जनांस्तान्हिनस्ति वा ।
पुरुषार्थं याच्यते वा जनैरिति जनार्दनः ॥ १२६ ॥

---

१ न विद्यते मृतं मरणमस्येति भाष्यम् ।

२ शाश्वतस्थाणुरिति समस्तपदद्वयेनैकनामत्वम् । प्राचीनचतुर्थ्यन्तकोशेषु तु शाश्वताय स्थाणव इति व्यस्तपदाभ्यामेकनामत्वमुक्तन्दृश्यत इति लघुविवरणे ।

३ "यम्प्राप्य न निवर्तन्ते ।"

४ "सर्वत्र रुक" इति क्वचित् ।

लोकाध्यक्षः सुराध्यक्षो धर्माध्यक्षः कृताकृतः ।
चतुरात्मा चतुर्व्यूहः चतुर्दंष्ट्रश्चतुर्भुजः ॥ १५ ॥

---

वि—"[1]तेषामेवे"ति वचनाद् वेदो वेदयतेः स्मृतः ।
वेदयत्येष शास्त्रस्य प्रदातृत्वादितीतरे ॥ १२७ ॥

निस्संशयविपर्यासं यथावद्वेत्ति केशवः ।
वेदार्थमित्यतः प्रोक्तस्सर्वशास्त्रेषु वेदवित् ॥ १२८ ॥

ज्ञानादिपरिपूर्णत्वादव्यङ्गो निष्कळः स्मृतः ।
व्यक्तिर्न विद्यतेऽस्येति वा"ऽव्यक्तोय"मिति स्मृतेः ॥ १२९ ॥

अङ्गभूता यस्य वेदास्स वेदाङ्ग इति स्मृतः ।
"नावेदविदमुं विष्णु मनुते त"मिति श्रुतेः ॥ १३० ॥

[2]विचारणाच्च वेदानां हरिर्वेदविदुच्यते ।
वेदं वेदैर्वेद्यधर्मश्चतं वेत्तीतरेऽब्रुवन् ॥ १३१ ॥

क्रान्तदर्शी कविः सर्वदृ"ङ्नान्योऽतोऽस्ति" वाक्यतः ।
"कविर्मनीषी परिभूस्स्वयम्भू"रिति मन्त्रतः ॥ १३२ ॥

लोकाध्यक्षस्त्वसौ लोकानध्यक्षयति यत्ततः ।
धर्माधिकारिणो लोकास्तानध्यक्षयतीतरे ॥ १३३ ॥

अध्यक्षस्सर्वदेवानां सुराध्यक्ष इति स्मृतः ।
कर्माराध्या देवता यास्तासामित्यपरेऽब्रुवन् ॥ १३४ ॥

धर्माधर्मान्वीक्षते यः साक्षात्तदनुरूपतः ।
[3]कर्मण्यस्तत्फलन्दातुं धर्माध्यक्षस्स संस्मृतः ॥ १३५ ॥

कार्यकारणरूपत्वात् कृताकृत इति स्मृतः ।
कृताकृतानुसन्धाता फलन्दातुमितीतरे ॥ १३६ ॥

---

१ "तेषामेवानुकम्पार्थ"मित्यादि भगवद्गीतावचनम् ।
२ वेदान् विन्ते विचारयतीति भाष्यम् ।
३ कर्मण्यः कुशलः ।

भ्राजिष्णुर्भोजनं भोक्ता सहिष्णुर्जगदादिजः ।
अनघो विजयो जेता विश्वयोनिः पुनर्वसुः ॥ १६ ॥

---

वि—[1]विभूतयश्चतस्रोऽस्य वर्गादिषु पृथक्पृथक् ।
सृज्यन्ते ब्रह्मदक्षाद्याः चतुरात्मेत्यतः स्मृतः ॥ १३७ ॥

चतुर्धा व्यूह्य चात्मानं वासुदेवादिमूर्तिभिः[2] ।
सृष्ट्यादिकं करोतीति चतुर्व्यूहः प्रकीर्तितः ॥ १३८ ॥

दंष्ट्राश्चतस्रो यस्येति चतुर्दंष्ट्रो नृकेसरी ।
चतुरस्रस्तथवा साम्यात्प्रोक्त "श्चत्वारि"मन्त्रतः ॥ १३९ ॥

भुजाश्चत्वारोऽस्य चत्वारो हरिस्तस्मा च्चतुर्भुजः ।
"चतुर्भुजमुदाराभ"मित्यादिषु च दर्शनात् ॥ १४० ॥

प्रकाशैकरसत्वाच्च भ्राजिष्णुरिति संस्मृतः ।
"तस्य भासा सर्वमिदं विभाती"त्यादिमन्त्रतः ॥ १४१ ॥

भोज्यरूपतया मायां प्रकृतिं भोजनं विदुः ।
उपासकैर्भुज्यतेऽसौ "रसो वै स" इतीतरे ॥ १४२ ॥

पुरुषात्मतया भुङ्क्त इति भोक्तायमच्युतः ।
भक्त्यार्पितस्य पत्रादेर्भोक्ता कृष्ण इतीतरे ॥ १४३ ॥

दैत्याद्यभिभवं कुर्वन् सहिष्णुरिति कीर्तितः ।
भक्तैः कृतानवज्ञादीन् सहतेऽसाविती तरे ॥ १४४ ॥

हिरण्यगर्भरूपेण जगदादौ स्वयं हरिः ।
उत्पद्यत इति प्रोक्तो जगदादिज इत्ययम् ॥ १४५ ॥

अनघो नाघमस्येति य "आत्मापहते"त्यतः ।
संसारमध्यगस्यापि नैवास्याघमितीतरे ॥ १४६ ॥

---

१ ब्रह्मा दक्षादयः कालस्तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतस्सृष्टिहेतवः ॥ इत्यादि भाष्ये ।
२ वासुदेव, सङ्कर्षण, प्रद्युम्ना, निरुद्धा मूर्तयः ।

उपेन्द्रो वामनः प्रांशुरमोघः शुचिरूर्जितः ।
अतीन्द्रस्सङ्ग्रहस्सर्गो धृतात्मा नियमो यमः ॥ १७ ॥

---

वि—ऐश्वर्याद्यैर्विजयते गुणैस्स विजयो हरिः ।
अस्मादन्यत्र विजयो नविद्यत इतीतरे ॥ १४७ ॥

जेताऽतिशेते यस्सर्वभूतान्येष स्वभावतः ।
"न त्वत्समोस्त्यभ्यधिकः कुतोन्य" इति शास्त्रतः ॥ १४८ ॥

विश्वं योनिर्यस्य, विश्वश्चासौ योनिश्च वेति सः ।
विश्वस्य योनिरेवेति विश्वयोनिरितीतरे ॥ १४९ ॥

क्षेत्रज्ञरूपेणैवायं शरीरेषु पुनः पुनः ।
यतो वसत्यतो देवः पुनर्वसुरिति स्मृतः ॥ १५० ॥

इन्द्रोपरि स्थितेरेष उपेन्द्र इति कीर्त्यते ।
"ममोपरि यदिन्द्रस्त्वं स्थापितो गोभि"रित्यतः ॥ १५१ ॥

जनैस्सम्भजनीयत्वाद् वामनो हरिरीश्वरः ।
यद्वा वामनरूपेण बलिं याचितवानिति ॥ १५२ ॥

स एव प्रांशुरभवत्क्रममाणो जगत्त्रयम् ।
"तोये तु पतिते हस्ते वामनोभूदवामनः" ॥ १५३ ॥

अमोघश्चेष्टितं यस्य सोऽमोघः परिकीर्तितः ।
प्रभावोऽस्यामितस्तस्मादमोघ इति चेतरे ॥ १५४ ॥

स्मरतां स्तुवतां वापि पावनत्वात् शुचिर्हरिः ।
उपकारे प्रतीकारनिरपेक्षतयेऽतरे ॥ १५५ ॥

बलप्रकर्षशालित्वाद् ऊर्जितोऽसौ प्रकीर्तितः ।
"स्वाभाविकी ज्ञानबलक्रिया चे"त्यादिवाक्यतः ॥ १५६ ॥

अतीत इन्द्रं ज्ञानाद्यैरित्यतीन्द्रः प्रकीर्तितः ।
"अति वा इन्द्रकर्माण"मित्याद्यत्रनिदर्शनम् ॥ १५७ ॥

वेद्यो वैद्यः सदायोगी वीरहा माधवो मधुः ।
अतीन्द्रियो महामायो महोत्साहो महाबलः ॥ १८ ॥

वि—सर्वेषाम्प्रतिसंहारात् सङ्ग्रहः कीर्तितो विभुः ।
भक्त्या सङ्गृह्यते यस्मान्न विद्याद्यैरितीतरे ॥ १५८ ॥

[1]सृज्यरूपतया सर्गः सर्गहेतुतयाऽथवा ।
भक्तेभ्यस्सृज्यत इति सर्ग इत्यपरेऽब्रुवन् ॥ १५९ ॥

धृतात्माऽसौ येन धृत आत्माऽक्षयतया स्वयम् ।
धृता आत्मप्रदानेन[3] येनात्मान इतीतरे ॥ १६० ॥

स्वाधिकारे नियमनात्प्रजानां नियमो हरिः ।
नियम्यन्तेऽनेन बलिप्रमुखा इति चेतरे ॥ १६१ ॥

यमोऽन्तर्यच्छतीत्युक्तो यमो यमयतीत्यतः ।
सर्वाञ्छ्रुते"र्यः पृथिवीमन्तरो यमयत्य"तः ॥ १६२ ॥

वेदनार्हतया वेद्यो जनैर्निश्रेयसार्थिभिः ।
"हृदा मनीषा मनसाऽभिक्लृप्तो य" इति श्रुतेः ॥ १६३ ॥

सर्वासामपि विद्यानां वैद्योऽयं वेदितृत्वतः ।
विद्यामधीत इति वा हरिर्वैद्य इति स्मृतः ॥ १६४ ॥

सदाऽविर्भूतरूपत्वात् सदायोगी,ऽपरेऽब्रुवन् ।
एष "सुप्तेषु जागर्ति" श्रुत्या जागर्ति सर्वदा ॥ १६५ ॥

धर्मत्राणाय केश्यादीन्वीरान् हन्तीति वीरहा ।
[4]विपरीतेरणाद्वीरा वैपरीत्यस्य बोधिनः ॥ १६६ ॥

"[5]मा विद्या च हरेः प्रोक्ता तस्या ईशो यतो भवान् ।
तस्मान्माधवनामासि धवस्स्वामीति शब्दितः" । ॥ १६७ ॥

---

१, २ सृजेः कर्मणि घञिति, भावघञन्तसृजेः सर्गहेतावुपचार इति चाशयः ।

३ 'प्रदानेनानेनात्मान' इत्यपि पाठः ।

४ वीरपदनिरुक्तिरियमिति भाति । विपरीतस्य अयथार्थस्य । ईरणाद्गमनात् ज्ञानात् ५ वैपरीत्यस्य बोधिनः मिथ्याज्ञानवन्त इत्येतदर्थ इति च भाति ।

५ हरिवंशस्थमिदं पद्यम् ।

महाबुद्धिर्महावीर्यो महाशक्तिर्महाद्युतिः ।
अनिर्देश्यवपुः श्रीमानमेयात्मा महाद्रिधृक् ॥ १९ ॥

---

वि—प्रजानाम्मधुवत्प्रीतेरुत्पादकतया [१]मधु ।
"प्रियो हि ज्ञानिनोऽत्यर्थमहं"मित्यादिवाक्यतः ॥ १६८ ॥

"अशब्दमस्पर्श"मिति श्रुतेश्शब्दाद्यभावतः ।
इन्द्रियाऽगोचरत्वेन कीर्तितो सा ह्यतीन्द्रियः ॥ १६९ ॥

मायाविनामपि महामायो मायाकरत्वतः ।
प्रमाणं स्मृतिरत्रैषा "योगमायासमावृतः" ॥ १७० ॥

महोत्साहो जगज्जन्मस्थित्याद्युद्योगवत्तया[२] ।
"अहं सर्वस्य प्रभवः" "जन्माद्यस्य यतः" स्मृतेः ॥ १७१ ॥

बलिनामपि सर्वेषां बलवत्त्वान्महाबलः ।
अजातश्रम इत्यर्थे स्वे महिम्नि प्रतिष्ठितः ॥ १७२ ॥

यस्सर्वेषां बुद्धिगतां विशेषाद्बुद्धिमानसौ ।
तस्मात्प्रोक्तो महाबुद्धिरिति सर्वेश्वरो हरिः ॥ १७३ ॥

महावीर्यो महद्वीर्यमविद्यात्मकमस्य यत् ।
अविकारात्मकं वीर्यमस्य [३]हेतावपीतरे ॥ १७४ ॥

महत्सामर्थ्यमस्येति महाशक्तिरिति स्मृतः ।
उपादाननिमित्तैकशक्तिमानिति चेतरे ॥ १७५ ॥

महती द्युतिरस्येति महाद्युतिरिति स्मृतः ।
करणापेक्षताशून्यं तेजोऽस्येति परेऽब्रुवन् ॥ १७६ ॥

स्वसंवेद्यतयान्यस्मै निर्देष्टुं यन्न शक्यते ।
अनिर्देश्यं वपुर्यस्य सोऽनिर्देश्यवपुः स्मृतः ॥ १७७ ॥

---

१ मधुरिति पुल्लिङ्गतयापि पाठः ।
२ स्थित्याद्युद्युक्तता यतः इति वा पाठः । स्थित्याद्युक्ततया यतः इति तु आदर्शे दृश्यते ।
३ विकारस्य हेतौ सत्यपीत्यर्थः ।

महेष्वासो महीभर्ता श्रीनिवासः सताङ्गतिः ।
अनिरुद्धः सुरानन्दो गोविन्दो गोविदाम्पतिः ॥ २० ॥

---

वि—श्रीमान् श्रीरस्य नित्येति समग्रैश्वर्यलक्षणा ।
षाड्गुण्यसम्पदा नित्ययुक्तश्श्रीमानितीतरे ॥ १७८ ॥

सर्वैरमेयबुद्धित्वादमेयात्मेति कीर्तितः ।
"समुद्र इव गाम्भीर्ये" इति वाल्मीकिवाक्यतः ॥ १७९ ॥

गोरक्षायै यो महाद्रिममृतस्य च मन्थिने ।
गोवर्धनम्मन्दरञ्च धृतवान्स महाद्रिधृक् ॥ १८० ॥

इषुक्षेपो महान्यस्य स महेष्वास उच्यते ।
"चापमानय सौमित्रे शरा"नित्यादिदर्शनात् ॥ १८१ ॥

महीभर्ता यो बभार महीमेकार्णवाप्लुताम् ।
"[1]स हि दाधार पृथिवीं द्यामुतेमा"मिति श्रुतेः ॥ १८२ ॥

श्रीनिवासो वसत्यस्य श्रीर्वक्षस्यनपायिनी ।
अत्र प्रमाणं "पद्माक्षीं विष्णुवक्षस्स्थलस्थिताम्" ॥ १८३ ॥

पुरुषार्थस्य साधूनां सिद्धौ हेतुः सताङ्गतिः ।
"निवासवृक्षस्साधूना"मित्यादि मुनिवाक्यतः ॥ १८४ ॥

प्रादुर्भावेषु केनापि नानिरुद्धो निरुद्ध्यते ।
एषोऽतिजीवचेष्टत्वादनिरुद्ध इतीतरे ॥ १८५ ॥

सुरानानन्दयत्येष सुरानन्द इति स्मृतः ।
"एषह्येवानन्दयाति" श्रुतिरप्यत्र दृश्यते ॥ १८६ ॥

[2]अविन्दद्धरणीन्नष्टामिति गोविन्द उच्यते ।
वाणीं विन्दयते यश्च गवामिन्द्रतयाऽथवा ॥ १८७ ॥

---

[1] स हीत्यस्य स्थाने स स इति मातृकायान्दृश्यते ।

[2] तत्तदर्थे प्रमाणतया मोक्षधर्मवचनं हरिवंशवचनञ्च भाष्ये दर्शितम् ।

मरीचिर्दमनो हंसः सुपर्णो भुजगोत्तमः ।
हिरण्यनाभः सुतपाः पद्मनाभः प्रजापतिः ॥ २१ ॥

---

वि—[1]वाणीं विन्दन्ति ये लोके तत्पतिर्गो वेदाम्पतिः ।
हंसनृसिंहरो वेदविदाम्पतिरितीतरे ॥ १८८ ॥

तेजस्विनाञ्च तेजस्त्वात् मरीचिरिति कीर्तितः ।
प्रकाशितस्वरूपोयमःघेभ्यो जनुषेऽपरे ॥ १८९ ॥

स्वाधिकारात्प्रमाद्यन्तीर्यस्माद्दमयति प्रजाः ।
वैवस्वतादिरूपेण तस्माद् दमन उच्यते ॥ १९० ॥

तादात्म्यभाविनो हंसो हन्ति संसारबन्धनम् ।
पुरुषाणां[2] शरीरेषु हंसो गच्छति, वेत्ति वा ॥ १९१ ॥

शोभनं पर्णमस्येति सुपर्णो, भाजिनीः[3] प्रजाः ।
संसारजलधेः पारन्नयतीति परेऽब्रुवन् ॥ १९२ ॥

भुजेन गच्छतां श्रेष्ठोह्यनन्तो भुजगोत्तमः ।
भुजगेस्योत्त[4]मश्शय्येत्यपरे तु प्रचक्षते ॥ १९३ ॥

नाभिर्हिरण्यनाभोऽस्य हिरण्यमिव दृश्यते ।
रमणीया हिता चास्य नाभिरस्तीतिवाऽथवा ॥ १९४ ॥

नारायणात्मना सोऽयन्तपश्चरति शोभनम् ।
हरिर्बदरिकारण्ये विख्यातः सुतपा इति ॥ १९५ ॥

नाभिः प[5]द्मवदस्यातः पद्मनाभ इति स्मृतः ।
यद्वा हृदयपद्मस्य नाभौ मध्ये प्रकाशनात् ॥ १९६ ॥

प्रजानामाधिपत्येन प्रजापतिरिति स्मृतः ।
दृश्यते मन्त्रवर्णोत्र "मृत्योर्मृत्युन्नमाम्य"हम् ॥ १९७ ॥

---

१ बाणं विन्दन्तीति मातृकापाठः । स न भाष्यानुसारी ।
२ हन्ति गच्छति सर्वशरीरेष्वि'ति भाष्यम् ॥
३ भाजिनीः इत्यस्य स्थाने भोजनम् इति मातृकायान्दृश्यते ।
४ 'त्तमश्शेषीत्यपरे' इति मातृकापाठः ।
५ पद्मवत् पद्ममिव सुवर्तुला ।

अमृत्युः सर्वदृक्सिंहः

---

वि— मृत्युर्नाशो विद्यतेऽस्य देशतः कालतोपि न ।
"[1]न जायते" मन्त्रवर्णात्सर्वतोऽमृत्युरीरितः ॥ १९८ ॥

स्वाभाविकेन बोधेन सर्वं पश्यति सर्वदृक् ।
"विश्वतश्चक्षु"रित्यादिश्रुतिरत्र निदर्शनम् ॥ १९९ ॥

[2]हिनस्ति सर्वभूतानि तस्मात् सिंह इति स्मृतः ।
नृसिंहरूपी भगवान्सिंह इत्यपरेऽब्रुवन् ॥ २०० ॥

**इति श्रीनामकारिकासहस्रे द्वितीयशतकं सम्पूर्णम् ॥**



---

१ न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः इत्यादिः । 'न जायत इति मन्त्रा'दिति मातृकायाम् ।

२ भाष्ये 'वाणीविलास'मुद्रिते "हिनस्तीति सिंह" इति, 'विवेकदीपिका'मुद्रिते ग्रन्थाक्षरमये तु "हिनस्ति स्मरणमात्रेण सर्वपापानी"ति दृश्यते ।

मू— सन्धाता सन्धिमान् स्थिरः ।
अजो दुर्मर्षणः शास्ता विश्रुतात्मा सुरारिहा ॥ २२ ॥

गुरुर्गुरुतमो धामः सत्यः सत्यपराक्रमः ।
निमिषोऽनिमिषः स्रग्वी वाचस्पतिरुदारधीः ॥ २३ ॥

---

वि— सन्धाता पुरुषानेष सन्धत्ते कर्मणां फलैः ।
प्रणवाद्यैर्नित्यसन्धिः संश्लेषकतयेतरे ॥ २०१ ॥

सन्धिमान् फलभोक्ता च भगवानेव सर्वदा ।
प्रह्लादाद्यैस्सन्धिरूपोपासनावानितीतरे ॥ २०२ ॥

सर्वदैकस्वरूपत्वात् स्थिर इत्युच्यते हरिः ।
संसारतापत्रितयदुर्विचालतयेतरे । ॥ २०३ ॥

अजो गच्छति मित्राणि यद्वा शत्रून् क्षिपत्यतः ।
स्तम्भप्रादुर्भावत्वान्नास्य जन्मान्नुवन् परे - ॥ २०४ ॥

दुर्मर्षणोऽशक्यतया मर्षितुन्दानवादिभिः ।
"अङ्गुल्यग्रेण तान्हन्यामिच्छ"न्नित्यादिवाक्यतः ॥ २०५ ॥

शास्ता श्रुतिस्मृतिभ्यां यदनुशिष्टि[1] करोति सः ।
"श्रुतिस्मृती ममैवाज्ञे यस्ता"मित्यादिवाक्यतः ॥ २०६ ॥

विशेषेण श्रुतो येन सत्यज्ञानादिलक्षणः[2] ।
सैवंश्रुतस्वरूपत्वाद् विश्रुतात्मेति चापरे ॥ २०७ ॥

सुरारिहा निहन्तृत्वाद्धिरण्यकशिपोर्हरिः ।
संसक्तकरजश्रेणीदीप्तेनोभयपाणिना ॥ २०८ ॥

गुरुर्विद्योपदेष्टृत्वाज्जनकत्वादथापि वा ।
हरिर्गुरुर्गुरुतमब्रह्मदीनामपीतरे ॥ २०९ ॥

---

१ शिक्षामिति पाठान्तरम् । २ लक्षणैरिति पाठान्तरम् ।

अग्रणीर्ग्रामणीः श्रीमान्न्यायो नेता समीरणः ।
सहस्रमूर्धा विश्वात्मा सहस्राक्षः सहस्रपात् ॥ २४ ॥

---

वि—विरिञ्चादेरपि यतो ब्रह्मविद्याप्रदायकः ।
तस्माद्गुरुतमो ज्ञेयो "यो ब्रह्माण"मिति श्रुतेः ॥ २१० ॥

धाम ज्योतिर्धाम यद्वा सर्वकामास्पदम्परम् ।
"नारायणपरो ज्योतिः" "ब्रह्म धामे"ति च श्रुतेः ॥ २११ ॥

सत्यः सत्यवचोरूपः "तस्मात्सत्य"मिति श्रुतेः ।
सत्यस्य सत्यमिति वा "प्राणा वै सत्य"मित्यतः ॥ २१२ ॥

सत्यः पराक्रमो यस्य सोयं सत्यपराक्रमः ।
पराक्रमस्य सत्यत्वं कैतवाभाव उच्यते ॥ २१३ ॥

निमीलिते यतो नेत्रो निमिषो योगनिद्रया ।
कटाक्षयति नैवायं विरोधिष्विति चेतरे ॥ २१४ ॥

नित्यप्रबुद्धरूपोसौ तस्मादनिमिषः स्मृतः ।
मत्स्यावतारेऽनिमिषो हरिरित्यपरेऽब्रुवन् ॥ २१५ ॥

बिभर्ति वैजयन्त्याख्यां भूततन्मात्रिकां स्रजम् ।
अजस्रमित्यतः प्रोक्तो हरि स्रग्वीति पण्डितैः ॥ २१६ ॥

वचसाञ्च पतिस्सोयं सर्वार्थविषयाऽस्य धीः ।
पदद्वयञ्चैकनाम वाचस्पतिरुदारधीः ॥ २१७ ॥

पदं प्रकृष्टन्नयति मुमुक्षून् अग्रणीरतः ।
तथाऽन्तिकन्नयेद्भक्तानग्रणीरिति चेतरे ॥ २१८ ॥

भूतग्रामस्य नेतृत्वाद् ग्रामणीरिति कीर्तितः ।
समाजान्नित्यसिद्धानान्नयतीत्यपरेऽब्रुवन् ॥ २१९ ॥

श्रीमान् श्रीः कान्तिरस्येति प्रोक्तस्सर्वातिशायिनी ।
मत्स्यरूपोपि विस्पष्टपरद्युतिरितीतरे ॥ २२० ॥

आवर्तनो निवृत्तात्मा संवृतः सम्प्रमर्दनः ।
अहस्संवर्तको वह्निरनिलो धरणीधरः ॥ २५ ॥

---

वि—[1]प्रमाणानुग्राहकोयस्तर्को न्यायः स मुक्तिदः ।
[2]अभ्रेषहेतुरित्यन्ये प्रमादात्कुर्वतां स्मृतेः ॥ २२१ ॥

निर्वाहकत्वाज्जगतां नेता, मुक्तङ्करोत्यतः ।
"निस्तारकम्महात्मान"मिति वाक्यादितीतरे ॥ २२२ ॥

समीरणश्चेष्टयति सर्वं श्वसनरूपतः ।[3]
समीचीनं यतस्सम्मूर्तेरीरणं चेष्टितं परे ॥ २२३ ॥

सहस्रमूर्धा मूर्धानस्सहस्राण्यस्य सन्त्यतः ।
मन्त्रा"स्सहस्रशीर्षे"ति "विश्वतोमुख" इत्यपि ॥ २२४ ॥

विश्वस्यात्मेति विश्वात्मा, व्याप्नोतीतीतरेऽब्रुवन् ।
सर्वञ्च ज्ञानशक्तिभ्यां "स भूमिं विश्वत" इति ॥ २२५ ॥

सहस्रमक्षीण्यस्येति सहस्राक्षः प्रकीर्तितः ।
मन्त्रा"स्सहस्राक्ष" इति "विश्वतश्चक्षु"रित्यपि ॥ २२६ ॥

पादास्सहस्रमस्येति कीर्तितोयं सहस्रपात् ।
"सहस्रपादि"ति श्रुत्या "विश्वतस्पा"दथापि च ॥ २२७ ॥

आवर्तनो हि संसारचक्रमावर्तयत्यतः ।
"कालचक्रं जगच्चक्र"मित्यादिमुनिवाक्यतः ॥ २२८ ॥

निवृत्तात्मा निवृत्तोऽस्य आत्मा संसारबन्धनात् ।
"त्रिपादूर्ध्वमु"दित्यादिमन्त्रवर्णस्य दर्शनात् ॥ २२९ ॥

---

१ प्रमाणानुग्राहको मुक्तिदो यस्तर्कः स न्याय इति योजना ।

२ प्रमादात् अङ्गेष्वनवधानेन कुर्वतां तपोदानादिक्रियाः कुर्वतां स्मृतेः स्वस्य स्मरणात् अभ्रेषहेतुः आचारादस्खलनसम्पादकः । वैकल्यपरिहारक इति यावत् । उक्तञ्च, "यस्य स्मृत्या च नामोक्त्या तपोदानक्रियादिषु । नूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम्" इति ।

३ अस्याः कारिकायाः पूर्वार्धमेव मातृकायामुपलभ्यते ।

**सुप्रसादः प्रसन्नात्मा विश्वधृग्विश्वभुग्विभुः ।**
**सत्कर्ता सत्कृतः साधुर्जह्नुर्नारायणो नरः ॥ २६ ॥**

---

वि—अविद्ययाऽऽच्छादिकया संवृतत्वेन **संवृतः** ।
"आदित्यवर्णं तमसः परस्ता"दिति वाक्यतः ॥ २३० ॥

रुद्रादिमूर्तिभिस्सम्यङ्मर्दनात् **सम्प्रमर्दनः** ।
स्वविद्यया संवरणं सम्प्रमर्दयतीतरे ॥ २३१ ॥

अह्नां प्रवर्तनात्सूर्यस्त्वहस्संवर्तकः स्मृतः ।
अहःप्रभृति कालादि सम्प्रवर्तयतीतरे ॥ २३२ ॥

[1]वहनाद्वह्निरन्ये तु प्रदेशेनेति चक्षते ।
दृश्यते मन्त्रवर्णोऽत्र "पादोऽस्येहाभवत्पुनः" ॥ २३३ ॥

**अनिलो**ऽनादिरूपत्वाद्दातृत्वात्मकतयाऽथवा ।
अनिति प्राणितीत्यन्ये "कोह्येवान्या"दिति श्रुतेः ॥ २३४ ॥

शेषरूपेण धरणीं यो धत्ते **धरणीधरः** ।
स "सदाधार पृथिवीं द्यामुतेमा"मिति श्रुतेः । ॥ २३५ ॥

शिशुपालादिराजानामपचारवतामपि ।
मोदकत्वात् **सुप्रसादः** प्रसादश्शोभनोऽस्य हि ॥ २३६ ॥

**प्रसन्नात्मा** मनोऽस्येति रागाद्यकलुषीकृतम् ।
करुणात्मस्वरूपत्वादाप्तकामतयाऽथवा ॥ २३७ ॥

विश्वं धृष्णोतीति [2] **विश्वधृग्**घरिः परिकीर्तितः ।
विश्वं सृजत्यतो विश्वसृडित्यन्ये प्रचक्षते ॥ २३८ ॥

**विश्वभुक्** पालयति वा भुङ्क्ते विश्व, मथेतरे ।
[3]विश्वं रुद्रादिभुक्त्वेन भुनक्तीति स विश्वभुक् ॥ २३९ ॥

---

१ वहनात् देवेभ्योऽग्निरूपेण हव्यस्य वहनात् । इति लघुविवरणे । प्रदेशेन अवयवत्वेन ।

२ धृष्णोति प्रगल्भीकरोतीति लघुविवरणे । ञि धृषा प्रागल्भ्ये इति भाष्ये च । विश्वधृषे इति चतुर्थ्यन्तम् ।

३ अस्यार्धस्यार्थस्सुधीभिश्चिन्तनीयः । रुद्रादिरूपेणेति वा पाठः ।

असङ्ख्येयोऽप्रमेयात्मा विशिष्टश्शिष्टकृच्छुचिः ।
सिद्धार्थस्सिद्धसङ्कल्पः सिद्धिदस्सिद्धिसाधनः ॥ २७॥

---

वि—हिरण्यगर्भरुद्रादिरूपेण विविधं प्रभुः ।
भवतीति विभुः ज्ञेयो "नित्यं विभु"मिति श्रुतेः ॥ २४०॥

सत्करोतीति सत्कर्ता सज्जनप्रतिपूजकः ।
"गुरुशुश्रूषया वीर" इति वाल्मीकिवाक्यतः ॥ २४१॥

सत्कृतः पूजितत्वेन पूजितैरपि पूजितः ।
सतां स्वस्वार्पणेनापि सत्कृतोयमितीतरे ॥ २४२॥

न्यायवर्तितया साधुः यद्वा सर्वस्य साधकः ।
सदपेक्षितदौत्यादिसाधनादिति चेतरे ॥ २४३॥

जह्नुर्जहात्यविदुषो[1] भक्तान्वा[2] नयते परम् ।
यद्वासंहारसमयेऽपह्नुते[3]ऽसौ जनानिति ॥ २४४॥

नराज्जातानि तत्त्वानि नाराणीति ततो विदुः ।
तान्येव चायनं[4] तस्य तेन नारायणः स्मृतः ॥ २४५॥

नयतीति नरः प्रोक्तः परमात्मा सनातनः ।
नरो जीवस्तद्विभूतिमत्त्वान्नर इतीतरे ॥ २४६॥

असङ्ख्येयो न सङ्ख्येयभेदादिर्यत्र विद्यते ।
अङ्गभूता यस्य जीवा न सङ्ख्येया इतीतरे ॥ २४७॥

अविज्ञेयस्वरूपत्वादप्रमेयात्मनामवान् ।
अप्रमेया असङ्ख्यत्वादस्य जीवा इतीतरे ॥ २४८॥

विशिष्टोऽसावतिशया"द्विश्वतः परम"श्रुतेः ।
अन्यापेक्षस्वराहित्यवैलक्षण्यादितीतरे ॥ २४९॥

---

१, २, ३. जहातेर्नुप्रत्यये, अन्तर्भूतण्यर्थाद्धाङ् गताविति धातोर्नुप्रत्यये, ह्नुङ् अपनयने इति धातोः पृषोदरादिमाहात्म्यमाश्रित्य च उक्तार्थानां लाभप्रकारः लघुविवरणे दर्शितः । परं परं पदमित्यर्थः ।

४. अयनं स्थानम् । तानि सर्वाणि व्याप्य स्थितत्वात् ।

**वृषाही वृषभो विष्णुर्वृषपर्वा वृषोदरः ।**
**वर्द्धनो वर्द्धमानश्च विविक्तः श्रुतिसागरः** ॥ २८ ॥

---

वि—शिष्टं शासनमित्युक्तन्तत्करोतीति **शिष्टकृत्** ।
यद्वा शिष्टान्करोतीति, शिष्टान्[1]पालयतीति वा ॥ २५० ॥

शुचिर्निरञ्जनोऽन्ये तु तान् स्वानुगुणशोभनान् ।
कुर्वन्ननानेयदीप्तिः[2] **शिष्टकृच्छुचिरब्रुवन्** ॥ २५१ ॥

[3]अध्यमानोऽर्थ इत्याहुः सिद्धो निर्वृत इत्यपि ।
**सिद्धार्थो**ऽवाप्तकामत्वात् "सत्यकाम" इति श्रुतेः ॥ २५२ ॥

सङ्कल्पो यस्य निष्पन्नः **सिद्धसङ्कल्प** एव तु ।
"सत्यसङ्कल्प" इत्यादिश्रुतिरत्रापि दृश्यते ॥ २५३ ॥

सिद्धिः फलानि कर्तृभ्यः स्वाधिकारानुरूपतः ।
**सिद्धिदः** प्रददातीति त्व[4]णिमाद्या इतीतरे ॥ २५४ ॥

सा[5]धकत्वेन सिद्धीनां **सिद्धिसाधन** उच्यते ।
अनुष्ठानक्षणेप्यस्योपासनं साधनं परे ॥ २५५ ॥

वृ[6]षाहो धर्मसंयुक्तं यस्मादस्य च विद्यते ।
दिनं, तस्माद्**वृषाहीति** कीर्तितो मुनिपुङ्गवैः ॥ २५६ ॥

वर्षत्येष स्वभक्तेभ्यः कामादीन् **वृषभस्ततः** ।
"उज्जीवयन्तस्स्वजनान् भवदग्धा"निति स्मृतेः ॥ २५७ ॥

---

१ सामान्यवचनो धातुर्विशेषवचनो दृष्टः । यथा कुरु काष्ठानित्याहरणे । तद्वदत्र करोतेः पालयत्यर्थत्वमिति भाष्ये स्पष्टम् ।

२ न आनेया अन्यतस्सम्पादनीया दीप्तिरस्येतिविग्रहः ।

३ द्वितीयमर्धमेव मातृकायां दृश्यते । प्रथमन्तु भाष्यमनुसृत्य पूरितम् ।

४ सिद्धिपदेनाणिमाद्याः प्राह्या इतीतर इत्यर्थः ।

५ साधनत्वेनेति मातृकायाम् । साधकत्वादिति भाष्ये ।

६ वृषो धर्मः पुण्यं तदेवाहः प्रकाशसाधर्म्याद्यज्ञविशेषो द्वादशाहप्रभृतिर्वृषाहः । सोस्यास्तीति वृषाही । वृषाह इत्यत्र 'राजाहस्सखिभ्यष्टच्' इति टच्प्रत्ययः इति प्राचीनभाष्यपुस्तके ।

सुभुजो दुर्धरो वाग्मी महेन्द्रो वसुदो वसुः ।
नैकरूपो बृहद्रूपः शिपिविष्टः प्रकाशनः ॥ २९ ॥

---

वि—[1]'विक्रमाद्विष्णुरादित्यो वा''दित्यानामहं''स्मृतेः ।
नान्वेषत्यविनाभूतो भवत्येतैरितीतरे ॥ २५८ ॥

वृषरूपाणि सोपानपर्वाण्याहुः परं पदम् ।
आरुरुक्षोस्ततो विष्णुः वृषपर्वा प्रकीर्तितः ॥ २५९ ॥

[2]वृषोदरो वर्षतीति सर्वा अस्योदरं प्रजाः ।
यस्योदरे धर्मलब्धं हविरित्यपरेऽब्रुवन् ॥ २६० ॥

वर्धनस्तूदरे कृत्वा प्रजा वर्धयतीत्यतः ।
"रक्षितव्यास्सदा राजन् गर्भभूता" इतीतरे ॥ २६१ ॥

वर्धमानः प्रपञ्चस्य स्वरूपेणैष वर्धते ।
"प्रजास्संवर्धयत्येषसर्वास्त्वय''मितीतरे ॥ २६२ ॥

स इत्थं वर्धमानोपि पृथगेवावतिष्ठते ।
लोकोत्तरगुणस्तेन विविक्तस्स इतीतरे ॥ २६३ ॥

श्रुतयस्सागरा[3] अस्मिंस्तिष्ठन्ति श्रुतिसागरः ।
श्रुतिभिस्सागरो विष्णुः प्रतिपाद्य इतीतरे ॥ २६४ ॥

सुभुजः शोभना अस्य जगद्रक्षाकरा भुजाः ।
"अभयं सर्वभूतेभ्यो ददामी''त्यादिवाक्यतः ॥ २६५ ॥

[4]धारयन्नप्यशक्यानि दुर्धरो धारकाण्ययम् ।
दुःखेन ध्यानसमये धार्यते वा मुमुक्षुभिः ॥ २६६ ॥

---

१ 'विष्णुर्विक्रमणा'दिति व्यासेनोक्तेरिति भाष्यम् । नान्वेषेत्यादेरर्थश्चिन्त्यः ।

२ वृषं प्रजानां वर्षणशीलमुदरं यस्येति प्रथमे, वृषो धर्म लक्षणया तल्लब्धं हविरुदरे यस्ये-ति द्वितीये च विग्रहः ।

३ सागराः सागरतुल्याः इतरमते श्रुतिप्रतिपाद्यः सागर इति मध्यमपदलोपी समासः भाष्ये तु 'श्रुतयस्सागर इवात्र निधीयन्त' इत्युक्तम् । तत्र श्रुतीनां सागरः निधिरिति षष्ठीसमासः ।

४ लोकधारकाण्यन्यैर्धारयितुमशक्यानि पृथिव्यादीनि धारयन् ।

ओजस्तेजोद्युतिधरः प्रकाशात्मा प्रतापनः ।
ऋद्धः स्पष्टाक्षरो मन्त्रः चन्द्रांशुर्भास्करद्युतिः ॥ ३० ॥

---

वि—वाङ्निस्सृता यतो ब्रह्ममयी वाग्मीति कथ्यते ।
'उत्तरोत्तरयुक्त्या च वक्ते'ति वचनादपि ॥ २६७ ॥

महांश्चेन्द्रो महेन्द्रोऽपीश्वराणामपीश्वरः ।
तेजोबलैश्वर्यमहाविभूतिरिति चेतरे ॥ २६८ ॥

वसुदो धनदातृत्वात् "वसुदान" इति श्रुतेः ।
"धनदेन समस्त्याग" इत्यादि वचनादपि ॥ २६९ ॥

तद्दीयमानं [1]वस्वेष, स्वरूपाच्छादनाद्वसुः ।
अन्तरीक्षे वसन् वायुः अन्तरिक्षस"दित्यतः ॥ २७० ॥

यस्मादेकत्वास्य रूपं नैकरूपस्ततो हरिः ।
"ज्योतींषि विष्णुर्भुवना"नीत्यादिस्मृतिवाक्यतः ॥ २७१ ॥

बृहद्रूपो महीं बिभ्रद्वाराहं रूपमस्य यत् ।
अन्येत्वेष्वेकमेवास्य व्यापकं रूपमूचिरे ॥ २७२ ॥

[2]शिपिविष्टः पशुष्वेष निविष्टो यज्ञरूपतः ।
शिपयो रश्मयस्तेषु निविष्टो वर्ततेऽथवा ॥ २७३ ॥

प्रकाशनस्वभावत्वात्सेवां स प्रकाशनः ।
स्वभक्तेभ्यः स्वरूपेण स्वं प्रकाशयतीतरे ॥ २७४ ॥

बलशौर्यादिदीप्तीर्यद्धारयत्यत ईश्वरः ।
ओजस्तेजोद्युतिधरो [3]यद्वा नाम्नामिदन्त्रयम् ॥ २७५ ॥

प्रकाशलक्षणश्चात्मा प्रकाशात्मेति कीर्तितः ।
मूर्खैरपि सुविज्ञातस्वभाव इति चेतरे ॥ २७६ ॥

---

१ धनवाची वसुशब्दः क्लीबे । तथैव प्रायशः केरळेषु नाम्नः पाठः । इतरयोरर्थयोस्तु पुंलिङ्गः ।

२ "यज्ञो वै विष्णुः पशवश्शिपिः यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुतिः ।

३ ओजः, तेजः, द्युतिधर इति त्रयम् ।

अमृतांशूद्भवो भानुः शशबिन्दुः सुरेश्वरः ।
औषधं जगतस्सेतुः सत्यधर्मपराक्रमः ॥ ३१ ॥

---

वि—प्रतापनः सवित्राद्यैः प्रतापयति यज्जगत् ।
"यदादित्यगतन्तेज" इत्यादिस्मृतिवाक्यतः ॥ २७७ ॥

ऋद्धो धर्मा[1]दिभिर्युक्तो विष्णु, रताप्युदाहृतः ।
"तदीयामद्भुताञ्चित्रामृद्धिमतामरिन्दम" ॥ २७८ ॥

[2]उदात्तः प्रणवोस्येति स्पष्टाक्षर उदाहृतः ।
ऋद्ध्या तदीयया स्पष्टं वेदाक्षमितीतरे ॥ २७९ ॥

मन्त्ररूपत्वतो मन्त्रः मन्त्रबोद्ध्यतयाथवा ।
मन्तारं त्रायत इति मन्त्र इत्यपरेऽब्रुवन् ॥ २८० ॥

संसारदुःखतिग्मांशु घृणितापितचेतसाम् ।
चन्द्रांशुरिव चन्द्रांशुः स्मृत आह्लादकत्वतः ॥ २८१ ॥

भास्करद्युतिसा[3]धर्म्याद् भास्करद्युतिरुच्यते ।
पराभिभावकत्वेन साधर्म्यमितरेऽब्रुवन् ॥ २८२ ॥

अमृतांशूद्भवो जन्म यस्माच्चन्द्रमसोऽभवत् ।
"चन्द्रमा मनसो जातश्चक्षोस्सूर्य" इति श्रुतेः ॥ २८३ ॥

भातीति भानुर्विष्णुः "तमेवभान्तमनु"श्रुतेः ।
उपजीव्यतयाभानोरपि भानुरितीतरे ॥ २८४ ॥

शशो लक्षणमस्येति शशबिन्दुस्तु चन्द्रमाः ।
सर्वं पुष्णातीति तद्वत् शशबिन्दुरिति स्मृतः ॥ २८५ ॥

सुराश्शोभनदातारस्तेषामीशः सुरेश्वरः ।
दैवतं दैवतानाञ्च भूतानां य इति स्मृतेः ॥ २८६ ॥

---

१ आदिना ज्ञानवैराग्यादीनां परिग्रहः ।

२ स्पष्टं उदात्तम् ओङ्कारलक्षणमक्षरमस्येति स्पष्टाक्षर इति भाष्यम् ।

३ यथा अर्कदीधितिः भूतानि भावयति, तथा विज्ञानरूपत्वादयमपीति साधर्म्यादिति लघुविवरणे ।

भूतभव्यभवन्नाथः पवनः पावनोऽनलः ।
कामहा कामकृत्कान्तः कामः कामप्रदः प्रभुः ॥ ३२ ॥

---

वि— औषधं भवभैषज्याद्भवेवात्र मुनेर्वचः ।
देवा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ २८७ ॥

समुत्तारणहेतुत्वाद्वाऽसाङ्कर्यकरत्वतः ।
लोकस्य, जगतस्सेतुः "एष सेतु"रिति श्रुतेः ॥ २८८ ॥

सत्या अवितथा धर्मा गुणा ज्ञानादयस्तथा ।
पराक्रमश्च यस्यैष सत्यधर्मपराक्रमः ॥ २८९ ॥

नाथस्तु[1] भूतभव्यानां भवताश्चानुतापतः ।
भूतभव्यभवन्नाथः तेषामीष्टेऽथ शास्ति वा ॥ २९० ॥

पवनः पवते यस्माद्गच्छतीति तथेतरे ।
"पवनः पवतामस्मि राम" इत्यादिवाक्यतः ॥ २९१ ॥

पवनं प्रेरयति यत्ततोऽसौ पावनः स्मृतः ।
"भीषास्माद्वात" इत्यादिमन्त्रवर्णस्य दर्शनात् ॥ २९२ ॥

न[2]पूर्वाण्णलतेर्गन्धवाचिनोऽनल उच्यते ।
ना[3]लं पर्याप्तमस्येति वाऽना[4]न् लातीति वाऽनलः ॥ २९३ ॥

मुमुक्षोर्हिंसकानां वा कामान् हन्तीति कामहा ।
"भिद्यते हृदयग्रन्थि"रित्यादिश्रुतिदर्शनात् ॥ २९४ ॥

सत्त्वानां कामिनां कामान् करोतीति स कामकृत् ।
प्रद्युम्नजनकत्वाद्वा कामकृत्त्वं रमेशितुः ॥ २९५ ॥

---

1 नाथृ याच्ञोपतापैश्वर्याशीष्ष्विति धातुः ।

2 णलतेः पचाद्यचि नलो गन्धवान् । तेन नञ्समासे गन्धशून्य इत्यर्थः । "अगन्धमरस"मिति श्रुतिः ।

3 अस्य सञ्जिहीर्षोः विश्वम् पर्याप्तमित्यर्थः ।

4 अनान् प्राणान् लाति आत्मत्वेनादत्त इत्यनलः जीवः । "अनत्यनेन लोको वाऽनलः" इत्यपि प्राचीनभाष्यपुस्तके दृश्यते ।

वि— अभिरूपतमः कान्तः सौकुमार्यादिभिर्गुणैः ।
रूपौदार्यगुणैः पुंसां दृष्टिचित्तविकर्षणात् ॥ २९६ ॥

मुमुक्षुभिः काम्यतया काम इत्युच्यते बुधैः ।
सुगुणत्वेन काम्यत्वात्सर्वैरित्यपरेऽब्रुवन् ॥ २९७ ॥

कामप्रदः सर्वकामान् भक्तेभ्यः प्रददाति यत् ।
"एको बहूना"मित्यादिमन्त्रवर्णस्य दर्शनात् ॥ २९८ ॥

प्रभुर्भवन् प्रकर्षेण स्वमूर्तिगतशोभया ।
दृष्टिचित्तापहरणे सर्वेषामिति चेतरे ॥ २९९ ॥

युगादेः कालभेदस्य कर्तृत्वेन युगादिकृत् ।
युगादीनां समारम्भं करोतीत्यथवा तथा ॥ ३०० ॥

॥ इति श्रीविष्णुसहस्रनामकारिकायां तृतीयं शतकम् ॥

# चतुर्थं शतकम्

युगावर्तो नैकमायो महाशनः।
अदृश्यो व्यक्तरूपश्च सहस्रजिदनन्तजित् ॥ ३३ ॥

इष्टोऽविशिष्टः शिष्टेष्टः शिखण्डी नहुषो वृषः।

---

वि— **युगावर्तः** कृतादीनि युगान्यावर्तयत्यतः।
"तथा महान्ति भूतानि युगान्यावर्तयाम्यहम्" ॥ ३०१ ॥

**नैकमायो** यस्य माया बह्व्यो यस्य विभूतयः।
"इन्द्रो मायाभि"रित्यादिमन्त्रादित्यपरेऽब्रुवन् ॥ ३०२ ॥

सर्वेषामपि कल्पान्ते ग्रसनात्स **महाशनः**।
"यस्य ब्रह्मापि च क्षत्रमुभे भवत ओदनः ॥ ३०३ ॥

**अदृश्योऽसौ** धीन्द्रियाणां सर्वेषामप्यगोचरः।
अपरेऽतर्क्यवृत्तान्तस्त्वदृश्य इति चक्षते ॥ ३०४ ॥

**अव्यक्तरूपः** स्थूलेभ्यो व्यतिरिक्तस्वरूपवान्।
**व्यक्तरूपो**[1] योगिनां वा स्थौल्याद्वा स्वप्रकाशनात् ॥ ३०५ ॥

सहस्राणि सुरारीणां जयतीति **सहस्रजित्**।
सहस्रयुगपर्यन्तं शयानो जयतीतरे ॥ ३०६ ॥

[2]सर्वभूतानि जयति युद्धादिष्वित्यनन्तजित्।
अनन्तस्य जयाद्वापि शयनादिति चेतरे ॥ ३०७ ॥

परानन्दतया वेष्टः पूजितत्वेन वा मखैः।
इष्टोऽविशिष्ट इत्येतदेकनामापरेऽब्रुवन् ॥ ३०८ ॥

---

1 व्यक्तरूप इति पाठो भाष्यानुसारी।

2 अनन्तत्वेन जयति युद्धादावित्यनन्तजित्। जयत्यस्यान्तमवधिं वेत्ति कश्चिद्वीतरे ॥ इति पाठान्तरम्।

**क्रोधहा क्रोधकृत्कर्ता विश्वबाहुर्महीधरः ॥ ३४ ॥**

---

वि— अविशिष्टश्च[1] सर्वेषामन्तर्यामितया हरिः ।
मूर्खैरप्यविशेषेण वाञ्छितत्वादितीतरे ॥ ३०९ ॥

शिष्टेष्टो[2] विदुषामिष्टः शिष्टैरिष्टोऽत्र च स्मृतिः ।
"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" ॥ ३१० ॥

शिखण्डोऽस्येत्यलङ्कारः शिखण्डी गोपवेषधृक् ।
शिखण्डः पारमैश्वर्यन्तेज इत्यपरेऽब्रुवन् ॥ ३११ ॥

यतो नह्यति[3] भूतानि मायया नहुषः स्मृतः ।
"तस्मिंश्चान्यो मायया यन्निरुद्ध" इति वाक्यतः ॥ ३१२ ॥

वृषः[4] कामस्य वर्षेण सोऽमृतोपमया गिरा ।
स्वकानाश्वासयन्[5] श्रान्तान् सिञ्चतीतीतरेऽब्रुवन् ॥ ३१३ ॥

क्रोधं हन्तीति साधूनां क्रोधहाऽन्ये तु भार्गवः ।
राजसु क्रोधमुत्पन्नं काश्यपोक्त्येति चक्षते ॥ ३१४ ॥

असाधुषु करोतीति क्रोधं क्रोधकृदच्युतः ।
क्रोधकृत् क्षत्रियेष्वेष पितृहत्या[6] पुरेतरे ॥ ३१५ ॥

कर्ताऽसौ[7] सर्वजगतः कर्मैनस्याखिलं जगत् ।
"यस्य वैतत्कर्म स वै वेदितव्य" इति श्रुतेः ॥ ३१६ ॥

---

1 गुणजात्यादिरहितत्वेन विशेषणरहितत्वाद्वा अविशिष्ट इति लघुविवरणे ।

2 अथवा नेति नेतीति अतन्निरासावधित्वेनावशिष्टश्शिष्टः, शिष्टश्चासाविशिष्टश्चेति च लघुविवरणे । स्मृतिप्रदर्शनेन, 'शिष्टा इष्टा अस्येति वा' इति भाष्योक्तार्थान्तरमपि सूचितं बोध्यम् ।

3 नह्यति बध्नाति ।

4 वृषः धर्मः इति भाष्यम् ।

5 स्वकान्त्या इत्यपि पाठः दृश्यते ।

6 पितृहत्येत्यस्य स्थाने काश्यपोक्तेरिति मातृकायां दृश्यते । तत्पक्षे क्रोधं कृन्ततीत्यर्थं इति भाति ।

7 क्रोधकृतां दैत्यादीनां कर्ता छेदक इति क्रोधकृत्कर्तेत्येकं वा नामेति भाष्ये ।

अच्युतः प्रथितः प्राणः प्राणदो वासवानुजः ।
अपान्निधिरधिष्ठानमप्रमत्तः प्रतिष्ठितः ॥ ३५ ॥

---

वि— आलम्बत्वेन सर्वेषां यद्वा विश्वेऽस्य बाहवः ।
"विश्वतोबाहु"रित्युक्तेः विश्वबाहुरिति स्मृतः ॥ ३१७ ॥

महीधरो महीं पूजां धरणीं धरतीत्यतः ।
"गामाविश्य च भूतानि धारयामी"ति वाक्यतः ॥ ३१८ ॥

षण्णां भावविकाराणामभावादच्युतः स्मृतः ।
यस्मान्न च्यवते स्थानात्तस्मात्सङ्कीर्त्यतेऽच्युतः ॥ ३१९ ॥

प्रख्यातः प्रथितो विष्णुर्जगज्जन्मादिकर्मभिः ।
श्रुणुतात्रापि वचनं "तस्य नाम महद्यशः" ॥ ३२० ॥

सूत्रात्मना प्रजास्सर्वाः प्राणः प्राणयतीत्यतः ।
"प्राणो वा अहमस्मी"ति "प्राणोऽस्मी"ति च वाक्यतः ॥ ३२१ ॥

[1]खण्डयत्यसुराणां वा ददाति त्रिदिवौकसाम् ।
चेतयत्यथवा प्राणान् प्राणदः परिकीर्तितः ॥ ३२२ ॥

अदित्यां काश्यपाद्विष्णुः सञ्जज्ञे वासवानुजः ।
कूर्मरूपोऽमृतार्थायानुजातो वासवं परे ॥ ३२३ ॥

आपो यत्र निधीयन्ते सोऽपान्निधिरिति स्मृतः ।[2]
कूर्मात्मना चाम्बुमध्ये निधीयत इतीतरे ॥ ३२४ ॥

अधिष्ठानमुपादानकारणात्मतया हरिः ।
भूतान्यत्राधितिष्ठन्ति "मत्स्थानीति"[3] च वाक्यतः ॥ ३२५ ॥

प्रयच्छन्नधिकारिभ्यः फलं कर्मानुरूपतः ।
न प्रमाद्यत्यतो विष्णुरप्रमत्तः प्रकीर्तितः ॥ ३२६ ॥

---

1 सुराणामसुराणां च प्राणं बलं ददाति द्यति वेति भाष्यम् ।

2 "सरसामस्मि सागरः" इति भगवद्वचनम् ।

3 "मत्स्थानि सर्वभूतानि" इति भगवद्वचनम् ।

**स्कन्दः स्कन्दधरो धुर्यो वरदो वायुवाहनः ।**
**वासुदेवो बृहद्भानुरादिदेवः पुरन्दरः ॥ ३६ ॥**

---

वि— स्वे महिम्नि स्थितत्वेन **प्रतिष्ठित** इति स्मृतः ।
"कस्मिन् प्रतिष्ठित" इति "स्वे महिम्नी"ति वाक्यतः ॥ ३२७ ॥

[1]**स्कन्द**स्त्वमृतरूपेण स्कन्दति स्रवतीत्यतः ।
वाय्वात्मना शोषणाद्वा दुःखं शोषयतीतरे ॥ ३२८ ॥

[2]स्वविभूतितया स्कन्दन्देवसेनान्यमप्ययम्
पुष्णात्यतः **स्कन्दधरः** "सेनानीनामहं"स्मृतेः ॥ ३२९ ॥

धुरं वहति यद्**धुर्यः** भूतजन्मादिलक्षणाम् ।
"विश्वं बिभर्ति भुवन"मित्यादेर्मन्त्रवाक्यतः ॥ ३३० ॥

**वरदः** प्रोच्यते यस्माद्ददात्यभिमतान् वरान् ।
"गौर्वरो"दक्षिणां तां वा यजमानस्वरूपतः ॥ ३३१ ॥

वहतस्सप्तावहादीन् वायून् वाहयतीत्यतः ।
**वायुवाहन** इत्युक्तो "भीषास्माद्वात"इत्यतः ॥ ३३२ ॥

[3]वसत्याच्छादयति वा वासुर्वासयतीति वा ।
देवश्च क्रीडनाद्येभ्यो **वासुदेव**स्ततो हरिः ॥ ३३३ ॥

बृहन्तो भानवो यस्य चन्द्रसूर्यादिगामिनः ।
[4]जगत्सर्वं भासयन्ति **बृहद्भानु**स्स उच्यते ॥ ३३४ ॥

कारणत्वाद**दिदेवो** [5]यद्वादानगुणत्वतः ।
"त्वमादिदेवः पुरुषः पुराण" इति वाक्यतः ॥ ३३५ ॥

---

1 स्कन्दिगतिशोषणयोरिति धातुः ।

2 भाष्ये तु स्कन्दं धर्मपथं धारयतीति स्कन्दधर इत्युक्तम् ।

3 सर्वत्र वसति, सर्वमस्मिन् वसति, वासयत्याच्छादयति स्वमायया जगदिति वा वासुरिति लघुविवरणे । क्रीडनाद्येभ्य इत्याद्यपदेन विजिगीषाव्यवहारद्योतनादयो गृह्यन्ते ।

4 तैर्विश्वं भासयति यस्स बृहद्भानुरुच्यते इति भाष्यम् ।

5 आदिरादानम् । भावे किः । स्वप्नावस्थायां तैजसरूपेण जाग्रदवस्थानुभूत पदार्थवासनानामादानेन दीव्यति व्यवहरतीत्यादिदेव इति लघुविवरणे ।

**अशोकस्तारणस्तारः शूरश्शौरिर्जनेश्वरः।**
**अनुकूलः शतावर्तः पद्मी पद्मनिभेक्षणः　　॥ ३७ ॥**

---

वि— दारणाद्देवशत्रूणां पुराणां स पुरन्दरः।
निगतो दृश्यतेऽत्रायं "वाचंयमपुरन्दरौ"　　॥ ३३६ ॥

**अशोक** इति शोकादिषडूर्मिपरिवर्जितः।[1]
आध्यात्मिकानां शोकानां विरोधीत्यपरेऽब्रुवन्　　॥ ३३७ ॥

**तारण**स्तारयति यदेष संसारसागरम्।
अन्ये तु प्रवदन्त्येवं तारयत्याधिभौतिकात्　　॥ ३३८ ॥

जन्ममृत्युजराभीतेस्तारणात् **तार** उच्यते।
अन्ये तु तारयत्याधिदैविकादिति चक्षते　　॥ ३३९ ॥

**शूरो** विक्रमणाच्छूरवंशोद्भवतयाऽथवा।
शूरस्सर्वजिगीषुत्वादित्यन्ये तु विपश्चितः　　॥ ३४० ॥

शूरापत्यं वासुदेवरूपः **शौरि**रिति स्मृतः।
"वसुदेवात् क्वचिज्जात" इत्यादिमुनिवाक्यतः　　॥ ३४१ ॥

**जनेश्वरो** जनानां स जन्तूनामीश्वरत्वतः।
इति प्रोक्तः "पतिं विश्वस्यात्मेश्वर"मिति श्रुतेः　　॥ ३४२ ॥

आत्मत्वेन हि सर्वेषाम**नुकूलो**,न हि स्वयम्।
स्वस्मिन्नेव प्रातिकूल्यं समाचरति पूरुषः　　॥ ३४३ ॥

**शतावर्तः** शतं प्रादुर्भावा[2] अस्येत्यतो हरिः।
नाडीनां शतके प्राणरूपेणावर्ततेऽथवा　　॥ ३४४ ॥

**पद्मी** तस्मादसौ यस्मात् पद्मं हस्तेऽस्य विद्यते।
"चतुर्भुजं कञ्जरथाङ्गशङ्ख"इत्यादिवाक्यतः　　॥ ३४५ ॥

[3]अस्येक्षणे दृशौ पद्मनिभे सरसिजोपमे।
यतः,सङ्कीर्त्यते तस्माद्विष्णुः **पद्मनिभेक्षणः**　　॥ ३४६ ॥

---

1 शोकमोहक्षुत्पिपासाजरामृत्यव ऊर्मयः।

2 धर्मत्राणायेत्यर्थसिद्धम्।

3 मातृकायामदर्शनाद्भाष्यानुसारेण रचितेयं कारिका।

पद्मनाभोऽरविन्दाक्षः पद्मगर्भः शरीरभृत् ।
महर्धिरृद्धो वृद्धात्मा महाक्षो गरुडध्वजः ॥ ३८
अतुलः शरभो भीमः समयज्ञो हविर्हरिः ।
सर्वलक्षणलक्षण्यो लक्ष्मीवान् समितिञ्जयः ॥ ३९

---

वि— पद्मनाभः पद्ममध्ये कर्णिकायां स्थितत्वतः ।
पद्मवन्मध्यनिम्नत्वात्तन्नाभेरिति चेतरे ॥[1] ॥ ३४७

अरविन्दोपमाक्षत्वादरविन्दाक्ष उच्यते ।
"तद्यथा कप्यास"मितिप्रभृतिश्रुतिदर्शनात् ॥ ३४८

पद्मगर्भस्तु हृत्पद्ममध्योपास्यतया हरिः ।
"यत्पुण्डरीक"मित्यादिविभिवाक्यस्य दर्शनात् ॥ ३४९

पोषयन्नन्नरूपेण प्राणरूपेण धारयन् ।
मायया वा शरीराणि बिभर्तीति शरीरभृत् ॥ ३५०

महत्यस्यर्धिरस्तीति महर्धिः स्मृतिरत्र च ।
"नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप" ॥ ३५१

ऋद्धः प्रपञ्चरूपेण वर्धमानतया स्मृतः ।
स्वविभूतिसमृद्ध्यापि स्वयमित्यपरेऽब्रुवन् ॥ ३५२

[2]पुरातनो हि यस्यात्मा वृद्धात्मेति स कीर्त्यते ।
दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभवः ॥ ३५३

महती अक्षिणी यस्य महाक्षोऽक्षाणि वास्य यत ।
महान् रथाक्षतुल्योऽस्य तार्क्ष्योऽस्तीत्यपरेऽब्रुवन् ॥ ३५४

गरुडाङ्को ध्वजो यस्य स एव गरुडध्वजः ।
कोटिजन्मार्जितं पापं दहते गरुडध्वजः ॥ ३५५

अतुलो नोपमास्येति "न त्वत्सम" इति श्रुतेः ।
"न तस्य प्रतिमास्ती"ति श्रुतिवाक्यादपीश्वरः ॥ ३५६

---

1 'पद्मवन्मध्यनिर्मुक्तं तं नाभेः' इति मातृकायान्दृश्यते ।

2 वृद्धात्मा नास्त्यस्य वृद्धः पुरातन इति प्रभुः इति मातृकायां पाठः । वृद्ध पुरातन आत्मा यस्येति वृद्धात्मा इति भाष्यम् ।

विक्षरो रोहितो मार्गो हेतुर्दामोदरः सहः ।
महीधरो महाभागो वेगवानमिताशनः　　　॥ ४० ॥

---

वि— शरीरं शीर्यमाणत्वाच्छर इत्युच्यते बुधैः ।
प्रत्यगात्मतयास्यान्तर्मातीति शरभो हरिः　　　॥ ३५७ ॥

सर्वमस्माद्बिभेतीति भीमो[1] यद्वा स पापिनाम् ।
"भीषास्मादि"ति च श्रुत्या "कम्पना"दिति सूत्रतः　॥३५८ ॥

जानाति समयान् षट् तान् यद्वा सृष्ट्यादिकालवित् ।
समयज्ञोऽस्य[2] यजनं सर्वत्र समतेति वा　　　॥ ३५९ ॥

हविर्हरिर्हविर्भागहृतेः,यद्वा द्रव्यं, हविः ।
हविस्स्वरूपः,संसारहृतेर्वा वर्णतो हरिः　　　॥ ३६० ॥

सर्वप्रमाणजं ज्ञानं सर्वलक्षणलक्षणम् ।
सर्वलक्षणलक्षण्यस्तत्र[3] साधुतया हरिः　　　॥ ३६१ ॥

लक्ष्मीवान् सर्वदा लक्ष्मीर्वक्षस्यस्य वसत्यतः ।
दृश्यतेऽत्रापि वचनं "विष्णोरेषानपायिनी"　　　॥ ३६२ ॥

समितिञ्जय इत्युक्तः स युद्धं जयतीति यत् ।
जीवनाशविवादोत्थं क्लेशं वा जयतीतरे　　　॥ ३६३ ॥

क्षरो[4] विनाशो जगतो यस्मादस्य स विक्षरः ।
प्रणयात् क्षरणाल्लक्ष्म्यां विक्षरोऽयमितीतरे　　　॥ ३६४ ॥

रोहितस्स्वच्छन्दतया[5] रोहितो[6] वर्णतोऽथवा ।
"ध्यायेत्कमलगर्भाभं देवं लक्ष्मीपतिं" ततः　　　॥ ३६५ ॥

"तमेव चाद्य"मित्येनं[7] मार्गयन्ते मुमुक्षवः ।
प्राप्यते परमानन्दो येन मार्गस्स एष वा　　　॥ ३६६ ॥

---

1 सः भीमः, पापिनां भयङ्कर इत्यर्थः । भाष्ये "सन्मार्गवर्तिनामभीम इति वा" इत्यप्युक्तम् ।　2 समत्वमाराधनमच्युतस्य इति प्रह्लादवचनम् ।

3 तस्यैव परमार्थत्वादिति भाष्यम् ।

4 विगतः क्षरो विनाशो यस्यासौ विक्षरः इति भाष्यम् ।

5 मत्स्य इत्यर्थः ।　6 त्रेतायां रक्तवर्णोऽसाविति भागवतोक्तेः ।　7 कर्मणि घञि प्रथमस्य करणे घञि द्वितीयस्य चार्थस्य लाभः ।

**उद्भवः क्षोभणो देवः श्रीगर्भः परमेश्वरः ।**
**करणं कारणं कर्ता विकर्ता गहनो गुहः ॥ ४१ ॥**

वि— हेतुः स एवोपादानं निमित्तं कारणञ्च सः ।
एष्टव्यसाधनत्वेन हेतुरित्यपरेऽब्रुवन् ॥ ३६७ ॥

**दामोदरो** लोकदामान्यस्य सन्त्युदरान्तरे ।
बद्धं दामोदरे यस्य, यद्वा गम्यो[1] दमादिभिः ॥ ३६८ ॥

सर्वानभिभवत्येष क्षमते वा **सहः** स्मृतः ।
दृश्यतेऽत्रापि वचनं "क्षमया पृथिवीसमः" ॥ ३६९ ॥

पृथिवीं गिरिरूपेण धत्ते तस्मान्**महीधरः** ।
"वनानि विष्णुर्गिरयो दिशश्चे"ति निदर्शनम् ॥ ३७० ॥

स्वेच्छामूर्ति**र्महाभागो** भुङ्क्ते भोगान् वरानिति ।
सर्वावयवसौन्दर्यान्महाभाग इतीतरे ॥ ३७१ ॥

मनसोपि जविष्ठत्वात् **वेगवानिति** कथ्यते ।
"अनेजदेकं मनसो जवीय" इति वाक्यतः ॥ ३७२ ॥

संहारसमये विश्वमश्नातीत्य**मिताशनः** ।
गोपकल्पितमैन्द्रं वाऽशनं महदितीतरे ॥ ३७३ ॥

उत्पत्तेः[2] कारणत्वाद्वा संसारादुद्गतोऽथवा ।
संसार उद्गतो यस्मात्स **उद्भव** इतीतरे ॥ ३७४ ॥

प्रविश्य क्षोभयामास प्रकृतिं पुरुषञ्च सः ।
सर्गकाले यतस्तस्मात् **क्षोभणः** परिकीर्तितः ॥ ३७५ ॥

**देवो** गच्छति सर्वत्र स्तूयते द्योततेऽथवा ।
दीव्यति व्यवहारं वा करोति विजिगीषते ॥ ३७६ ॥

---

1 दमादिसाधनेन उदरः उत्कृष्टा मतिः तया गम्यत इति भाष्यम् । उत्पूर्वकात् ऋ गताविति धातोः पचाद्यचि उदर इति रूपम् । गत्यर्थत्वादरशब्दो ज्ञानार्थकः । तत्र भव इत्यण् । वृद्धिश्च ।

2 "प्रपञ्चोत्पत्त्युपादानकारणत्वादुद्भवः । उद्गतो भवात्संसारादिति वा" इति भाष्यम् ।

व्यवसायो व्यवस्थानः संस्थानः स्थानदो ध्रुवः ।

---

श्रीविभूतिर्जगद्रूपा स्थिता यस्योदरान्तरे ।
त्रयीसंरक्षणस्थानं श्रीगर्भ इति चेतरे ॥ ३७७ ॥

लक्ष्मीपरिग्रहफलं पारमैश्वर्यमस्य यत् ।
"अतीव रामश्शुशुभ" इत्यतः परमेश्वरः ॥ ३७८ ॥

करणं जगतां सृष्टौ स साधकतमत्वतः ।
इन्द्रियादिविभूतित्वादित्यन्ये तु प्रचक्षते ॥ ३७९ ॥

उपादाननिमित्तञ्च जगतः कारणं हरिः ।
इन्द्रियादिस्वरूपेण कारणं केचिदूचिरे ॥ ३८० ॥

कर्ता स्वतन्त्रकर्तृत्वाज्जगतो जनकः परे ।
"योनिः पिते"ति "जनिता यो विधाते"ति वाक्यतः ॥ ३८१ ॥

विकर्ता च हरिः प्रोक्तो विचित्रभुवनक्रियः ।
तदीहितो विकारोऽयं भक्ष्यभक्षणभेदतः ॥ ३८२ ॥

गहनः चेष्टितं रूपञ्चास्य ज्ञातुन्न शक्यते ।
"गुहे वसन्त"मित्यादिमन्त्रवर्णस्य दर्शनात् ॥ ३८३ ॥

स्वरूपं संवृणोतीति गुहोऽयन्निजमायया ।
गुहाशयत्वादित्यन्ये "यो वेद निहितं"श्रुतेः ॥ ३८४ ॥

संविन्मात्रस्वरूपत्वाद् व्यवसाय इति स्मृतः ।
बुद्धेर्निश्चयरूपिण्या जनकोऽयमितीतरे ॥ ३८५ ॥

यस्मिन् व्यवस्थितं विश्वं स व्यवस्थान उच्यते ।
वर्णाश्रमादिकान् धर्मान् प्रविभज्य करोति वा ॥ ३८६ ॥

संस्थानः संस्थितिर्यत्र भूतानां प्रळयात्मिका ।
समीचीनं स्थानमस्यास्त्यतो वा स तु कीर्तितः ॥ ३८७ ॥

---

1 परमश्चासावीशनशीलश्चेति परमेश्वर इति भाष्यम् ।

2 इदमर्धं भाष्यानुसारेण लिखितम् । मातृकायाश्च दृश्यते ।

**परर्धिः परमस्पष्टः तुष्टः पुष्टः शुभेक्षणः** ॥ ४२ ॥
**रामो विरामो विरतो मार्गो नेयो नयोऽनयः ।**

---

वि— सम्यक् स्थानन्ददातीति कामकर्मानुरूपतः ।
**स्थानदः** प्रोच्यते सद्भिर्भगवान् पुरुषोत्तमः ॥ ३८८ ॥

**ध्रुवो** विनाशराहित्यात्, [1]ध्रुवं व्रजयतीतरे ।
अन्यैस्सुदुर्लभं लेभे सर्वोन्नतपदं ध्रुवः ॥ ३८९ ॥

विभूतिः परमास्यास्ति **परर्धिः** कीर्तितस्ततः ।
मानुषत्वेपि रामस्य ऋद्धिः परमिका यतः ॥ ३९० ॥
अनन्याधीनसिद्धित्वात् **परमस्पष्ट** उच्यते ।
दयावशात्स सर्वेषामतिस्पष्ट इतीतरे ॥ ३९१ ॥
परमानन्दरूपत्वात्सर्वदा **तुष्ट** उच्यते ।
जगत्पालनतोषेण तुष्ट इत्यपरेऽब्रुवन् ॥ ३९२ ॥
**पुष्टः** पूर्णतया विष्णुर्गुणैः पूर्ण इतीतरे ।
"तमेवंगुणसम्पन्नं राम"मित्यादिवाक्यतः ॥ ३९३ ॥
ईक्षणन्दर्शनं यस्य शुभं मुक्तिप्रदन्नृणाम् ।
मुमुक्षूणां कामिनाञ्च भोगदं स **शुभेक्षणः** ॥ ३९४ ॥
परमानन्दरूपेस्मिन् रमन्ते योगिनो यतः ।
रमणीयवपुष्ट्वाद्वा **राम** इत्युच्यते हरिः ॥ ३९५ ॥
**विरामः** प्राणिनामस्मिन्नवसानमिति स्मृतः ।
विरम्यतेस्मिन्वरदैर्ब्रह्मादिभिरितीतरे ॥ ३९६ ॥
**विरतो** विगतो राग एतस्य विषयेष्वतः ।
न चास्य महतीं लक्ष्मीं राज्यनाशोऽपकर्षति ॥ ३९७ ॥

[2]यं विदित्वाऽमृतत्वाय प्रकल्पन्ते मुमुक्षवः ।
असौ **मार्गः** श्रुते"र्नान्यः पन्था विद्यतेऽयनाय" ॥ ३२.८ ॥

---

1 ध्रुवं शाश्वतम्पदं व्रजयति प्रापयतीत्यर्थः। तदेवोदाहृत्योपपादयति—अन्यैरित्यादिना। "ध्रुवं वा जयतीतरे" इति मातृकायान्दृश्यते। तस्यार्थो नावगम्यते।

2 योगिनो यं विदित्वा वै प्रकल्पन्ते मुमुक्षवः इति पाठान्तरम्। तत्र अमृतत्वायेति शेषः।

वि— मार्गेण सम्यक् ज्ञानेन जीवो नेयः परात्मताम्।
तपस्विनान्नियोगं स नेतुमर्ह इतीतरे ॥ ३९९ ॥

नयतीति नयो[1] नेता स नास्येत्यनयश्च सः।
अनयो[2] नय इत्येतन्नामैकं सविशेषणम् ॥ ४०० ॥

॥ इति श्रीविष्णुसहस्रनामकारिकायां चतुर्थं शतकम् ॥



---

1 "मार्गो नेयो नय इति त्रिरूपः परिकल्प्यत" इति भाष्यम्। मोक्षमार्गत्वेन मोक्षणीयत्वेन मोक्षयितृत्वेन च भगवांस्त्रिधा स्तूयत इत्यर्थः।

2 "मार्गो नेय" इत्येकनामेति, "नेयो नय" इत्येकमिति, च पक्षौ लघुविवरणे दर्शितौ। रघुनाथतीर्थस्तु नयानययोरेकनामत्वमाहेत्यप्युक्तं लघुविवरणे। तेन ज्ञायते एतन्नामकारिकाकर्ता रघुनाथतीर्थ इति।

# पञ्चमं शतकम्

वीरः शक्तिमतां श्रेष्ठो धर्मो धर्मविदुत्तमः ॥ ४३ ॥
वैकुण्ठः, पुरुषः प्राणः प्राणदः प्रणवः पृथुः ।

---

वीरो विक्रमशालित्वाद्, रक्षोगणभयप्रदम् ।
विशेषेणेरणं तस्य तस्माद्वीर इतीतरे ॥ ४०१ ॥

शक्तिमन्तो विरिञ्चाद्यास्तेषां श्रेष्ठतमत्वतः ।
प्रोक्तश्शक्तिमतां श्रेष्ठो मुनिभिः पुरुषोत्तमः ॥ ४०२ ॥

भूतानान्धारणाद् धर्मः धर्माराध्यतयाऽथवा ।
"स्वकर्मणा तमभ्यर्च्य सिद्धि"मित्यादिवाक्यतः ॥ ४०३ ॥

यस्य श्रुतिस्मृती चाज्ञे सोऽसौ धर्मविदुत्तमः ।
मन्वादयो ये धर्मज्ञास्तेषां श्रेष्ठ इतीतरे ॥ ४०४ ॥

विकुण्ठयाः स्त्रियोऽपत्यं, भूतसंश्लेषणेन वा ।
कुण्ठां प्रतिहतिङ्कुर्वन् वैकुण्ठो विविधाङ्गतेः ॥ ४०५ ॥

सदनात्पुरा सर्वस्मात्सर्वपापस्य सादनात् ।
"सर्वान् पाप्मन औषत्"[1] पुरुषः शयनश्रुतेः ॥ ४०६ ॥
प्राणिति क्षेत्रज्ञतया चेष्टारूपेण चेतरे ।
प्राणानां प्राणरूपत्वात् प्राणः "प्राणमिति" ...तेः ॥ ४०७ ॥

खण्डयन् प्राणिनां प्राणान् प्राणदः प्रळयादिषु ।
दापयन् वा नरप्राणानित्यन्ये तु प्रचक्षते ॥ ४०८ ॥

प्रणवोऽसौ यम्प्रणौति[2], देवा यम्प्रणमन्ति वा ।
प्रणावयति यत्सर्वान् प्रणवस्तदितीतरे[3] ॥ ४०९ ॥

---

1 "स वा अयं पुरुषः सर्वासु पूर्षु शेते" इति श्रुतिः । 'शयनाद्वा पुरि श्रुतेः' इति मातृकायान्दृश्यते । नाज्ञोऽदर्शनात्तत्पाठसाधुता चिन्त्या ।

2 प्रणूयत इति प्रणवः णु स्तवने । प्रपूर्वात्कर्मणि ऋदोरप् ।

3 णमु प्रह्वत्वे । प्रपूर्वात्कर्मणि घञ् । णत्वम् । पृषोदरादित्वाद्वृद्धिर्मकारस्य वकारश्च इति लघुविवरणे उक्तम् ।

हिरण्यगर्भः शत्रुघ्नो व्याप्तो वायुरधोक्षजः ॥ ४४ ॥
ऋतुः सुदर्शनः कालः परमेष्ठी परिग्रहः ।

---

वि— प्रपञ्चात्मतया देवो विस्तृतत्वात् पृथुः स्मृतः ।
यशसा विस्तृतत्वेन पृथुरित्यपरेऽब्रुवन् ॥ ४१० ॥

[1]अस्य स्ववीर्यसम्भूतमण्डं गर्भे हिरण्मयम् ।
अतो हिरण्यगर्भोऽसावुच्यते मुनिपुङ्गवैः ॥ ४११ ॥

दशेन्द्रियाननं हन्ति यो मनोरजनीचरम् ।
विवेकशरजालेन शत्रुघ्नो[2] योगिनामसौ ॥ ४१२ ॥

व्याप्तोऽसौ सर्वकार्याणां कारणत्वेन केशवः ।
सर्वत्र शत्रुमित्रादौ वात्सल्येनेतरेऽब्रुवन् ॥ ४१३ ॥

[3]वाति गन्धं करोतीति वायुरित्युच्यते हरिः ।
पुत्रामित्रदारप्रेष्यादीन् गच्छतीतीतरेऽब्रुवन् ॥ ४१४ ॥

द्यौरक्षं पृथिवी चाधो मध्ये जातत्वतो विराट् ।
[4]यद्वा न क्षीयते योऽसौ जातु तस्मादधोक्षजः ॥ ४१५ ॥

सर्वकालात्मना चैष ऋतुशब्देन लक्ष्यते ।
प्रजाः क्लेशापनोदार्थमृच्छन्त्येनमितीतरे ॥ ४१६ ॥

सुदर्शनः शोभनाक्षो [5]यज्ज्ञानम्मुक्तिदं सदा ।
सुखेन दृश्यते भक्तैर्धत्ते वा शोभनं वपुः ॥ ४१७ ॥

---

1 'तदस्य वीर्यसम्भूतमण्डं यस्माद्धिरण्मयम्' इति पाठान्तरम् ।

2 योगिनामिति मन इत्यनेनान्वयि । मनसश्चात्र रावणत्वेन रूपणम् । "त्रिदशशत्रून् हन्तीति शत्रुघ्न" इति भाष्यम् ।

3 'पुण्यो गन्धः पृथिव्याञ्च' इति भगवद्वचनादिति भाष्यम् ।

4 अधो न क्षीयते जातु यस्मात्तस्मादधोक्षज इति उद्योगपर्वणि । अधोभूते ह्यक्षगणे प्रत्यग्रूपप्रवाहिते । जायते तस्य वै ज्ञानं तेनाधोक्षज उच्यते । इत्यप्युक्तं भाष्ये ।

5 शोभनं मुक्तिफलकं दर्शनं यस्य स सुदर्शनः ।

**उग्रः संवत्सरो दक्षो विश्रामो विश्वदक्षिणः ॥ ४५ ॥**
**विस्तारः स्थावरस्थाणुः प्रमाणं बीजमव्ययम् ।**

---

वि— **कालः** "कालः कलयतामस्मी"तीश्वरवाक्यतः ।
शत्रूणां कालसादृश्यात् कालोऽयमिति चेतरे ॥ ४१८ ॥
**परमेष्ठ्य**यस्य परमे प्रकृष्टे स्वे महिम्नि वा ।
हृदाकाशेऽथवा स्थातुं शीलं साक्षितया यतः ॥ ४१९ ॥
**परिग्रहो** गृह्यतेऽसौ परितश्शरणार्थिभिः ।
परिगृह्णाति वा भक्तैरर्पितं कुसुमादिकम् ॥ ४२० ॥
**उग्रो**ऽसौ भयहेतुत्वात्सूर्यादीनामपीश्वरः ।
"भीषास्माद्वात" इत्यादिश्रुतिवाक्यानुसारतः ॥ ४२१ ॥
भूतानि संवसन्त्यस्मिन्निति **संवत्सरो** हरिः ।
सर्वप्रपञ्चरूपेण वर्तमानतयाऽथवा ॥ ४२२ ॥
**दक्षः** सर्वाणि कर्माणि करोति क्षिप्रमित्यतः ।
दक्षधातो रक्षणार्थाच्छरण्य इति चेतरे ॥ ४२३ ॥
षडूर्मिक्षुत्पिपासादितरङ्गितभवाम्बुधौ ।
विश्रान्तिं काङ्क्षतां पुंसां **विश्रामो** मोक्षकृत्त्वतः ॥ ४२४ ॥
विश्वस्माद्दक्षिणश्शक्तः, यद्वा विश्वेषु कर्मसु ।
विश्वरक्षक इत्यन्यैरतोऽसौ **विश्वदक्षिणः** ॥ ४२५ ॥
**विस्तारो**ऽस्मिन् समस्तानि विस्तार्यन्ते जगन्त्यतः ।
विस्तारयति भक्तानां फलमित्यपरेऽब्रुवन् ॥ ४२६ ॥
स्थावरः स्थितिशीलत्वात् स्थितिशीलाश्च खादयः ।
तिष्ठन्त्यत्रेति च स्थाणुः **स्थावरस्थाणु**रित्यतः ॥ ४२७ ॥
**प्रमाणं** संविदात्मत्वात्, पितृवाक्यस्य पालने ।
धर्मेष्वन्येष्वेष एव प्रमाणमिति चापरे ॥ ४२८ ॥
अन्यथाभावरहितं कारणं **बीजमव्ययम्** ।
प्ररोहयति सर्वत्र धर्ममित्यपरेऽब्रुवन् ॥ ४२९ ॥

अर्थोऽनर्थो महाकोशो महाभोगो महाधनः ॥ ४६ ॥
अनिर्विण्णः स्थविष्ठोऽभूर्धर्मयूपो महामखः ।
नक्षत्रनेमिर्नक्षत्री क्षमः क्षामः समीहनः ॥ ४७ ॥

---

वि— अर्थोऽसौ सुखरूपत्वात्सर्वैरर्थ्यत इत्यतः ।
विषयासक्तिरहितैः प्राप्यतेऽयमितीतरे ॥ ४३० ॥

अनर्थोऽवाप्तकामत्वान्नास्त्येतस्य प्रयोजनम् ।
अर्थ्यते प्रार्थ्यते नासौ कुयोगिभिरितीतरे ॥ ४३१ ॥

महाकोशो महान्तोऽस्य कोशा अन्नमयादयः ।
आच्छादकाः, सदा दानेप्यक्षयत्वादितीतरे ॥ ४३२ ॥

महाभोगो महान् भोगस्सुखरूपोऽस्य विद्यते ।
स्वाश्रितानाम्महान्तोऽस्माद्भोगा इत्यपरेऽब्रुवन् ॥ ४३३ ॥

महद्यस्य धनं भोगसाधनं स महाधनः ।
महन्त्यस्माद्धनानीति महाधन इतीतरे ॥ ४३४ ॥

अनिर्विण्णोऽस्य निर्वेदः पूर्णकामत्वतो न हि ।
भक्ताभीष्टप्रदानेऽस्य न निर्वेद इतीतरे ॥ ४३५ ॥

स्थितो वैराजरूपेण स्थविष्ठ इति कीर्तितः ।
तारारूपतया स्थूलः शिशुमार इतीतरे ॥ ४३६ ॥

अभूरजन्मा सत्ता वा भूर्मही वेतरे विदुः ।
ध्रुवानुबन्धेनाधारस्सर्वस्य भवतीति भूः ॥ ४३७ ॥

मखीययूपे पशुवत्समाराधनलक्षणाः ।
धर्मा बध्यन्त एतस्मिन् धर्मयूपस्ततो हरिः ॥ ४३८ ॥

यस्मिन् समर्पिता यज्ञा मोक्षदाः स महामखः ।
धर्मात्मकतया पूज्यो यज्ञोऽस्यावयवः परे ॥ ४३९ ॥

नक्षत्रनेमिर्हृदये शिशुमारस्य यः स्थितः ।
प्रवर्तकतया प्रोक्तो ज्योतिश्चक्रस्य नेमिवत् ॥ ४४० ॥

---

1 शिशुमारस्य हृदये ज्योतिश्चक्रस्य नेमिवत्प्रवर्तकः स्थितो विष्णुरिति नक्षत्रनेमिः । शिशुमारवर्णने 'विष्णुर्हृदयम्' इति स्वाध्यायब्राह्मणे श्रूयते ।

## यज्ञ इज्यो महेज्यश्च क्रतुः सत्रं सतां गतिः।

वि— [1]चन्द्ररूपेण **नक्षत्री**, नायको न हि केवलम्।
ज्योतिषां, किन्तु नेतॄणां सूर्यादीनामपीतरे ॥ ४४१ ॥

समर्थस्सर्वकार्येषु क्षमावानिति वा **क्षमः**।
श्लोके बबन्ध वाल्मीकिः "क्षमया पृथिवीसमः" ॥ ४४२ ॥

स्वात्मन्यवस्थितः **क्षामो** विकारे क्षपिते सति।
"क्षायो म" इति निष्ठायां मकारादेशनत्वतः ॥ ४४३ ॥

सृष्ट्यर्थमीहते सम्यग्यतस्तस्मात् **समीहनः**।
विचेष्टयति भूतानि सम्यगेष इतीतरे ॥ ४४४ ॥

**यज्ञो** यज्ञस्वरूपत्वात् "यज्ञो वै विष्णु"रित्यतः।
वैदिकश्चापि कर्मास्य विभूतिरिति चेतरे ॥ ४४५ ॥

**इज्यो**ऽयमेव यष्टव्यो ये यजन्तीह देवताः।
सर्वभूतान्तरात्मानं विष्णुमेव यजन्ति ते ॥ ४४६ ॥

**महेज्यो**ऽसौ प्रकर्षेण यष्टव्यो देवतास्वपि।
यष्टव्यासु च सर्वासु मोक्षप्रदतया हरिः। ॥ ४४७ ॥

**क्रतु**र्यूपयुतो यज्ञो "ह्यहं क्रतु"रिति स्मृतेः।
अहीनैकाहसत्रादिः क्रतुरित्यपरेऽब्रुवन् ॥ ४४८ ॥

[2]**सत्रं** यदासनोपायचोदनालक्षणं, सताम्।
अस्मात्त्राणनमित्यन्ये सद्भिः स्तूयत एव वा ॥ ४४९ ॥

नान्या गतिर्मुमुक्षूणामत एव **सताङ्गतिः**।
तेषान्तत्परमं स्थानं यद्वै गच्छन्ति साधवः ॥ ४५० ॥

---

1 'नक्षत्राणामहं शशी'इति भगवद्वचनात्।

2 सत्रन्त्वास्मासनेति मातृकायाम्। आसत्युपैति चोदनालक्षणं सत्रमिति भाष्यम्। आसनोपाधिचोदनालक्षणं सत्रमिति ग्रन्थाक्षरपुस्तकीयभाष्यपाठः।

सर्वदर्शी विमुक्तात्मा सर्वज्ञो ज्ञानमुत्तमम् ॥ ४८ ॥
सुव्रतः सुमुखः सूक्ष्मः सुघोषः सुखदः सुहृत् ।

---

वि— सर्वदर्शी पश्यतीति सर्वं प्राणिकृताकृतम् ।
"सर्वाध्यक्षस्सर्वभूताधिवास"इति मन्त्रतः ॥ ४५१ ॥

स्वभावेन विमुक्तत्वाद् विमुक्तात्मेति कथ्यते ।
विद्यते श्रुतिरत्रैषा "विमुक्तश्च विमुच्यते" ॥ ४५२ ॥

सर्वश्चासौ ज्ञश्च विष्णुः सर्वज्ञ इति कीर्तितः ।
स्वमूर्तित्वेन जानाति सर्वमित्यपरेऽब्रुवन् ॥ ४५२ ॥

प्रकृष्टमनवच्छिन्नं ज्ञानं सर्वस्य साधनम् ।
"सत्यं ज्ञान"मिति श्रुत्या ब्रह्मैव ज्ञानमुत्तमम् ॥ ४५३ ॥

शोभनं व्रतमस्तीति सुव्रतः परिकीर्तितः ।
प्रपन्नाभयदानेऽस्य "सकृदेवेति"[1] वाक्यतः ॥ ४५५ ॥

सौन्दर्याद्वा प्रसादाद्वा विद्यानां वोपदेशतः ।
शोभनं मुखमस्येति सुमुखः परिकीर्तितः ॥ ४५६ ॥

शब्दादयो हि खादीनां स्थूलानामुत्तरोत्तरम् ।
कारणानि भवन्त्येते सूक्ष्मोऽसौ तदभावतः ॥ ४५७ ॥

सुघोषः शोभनो घोषो वेदात्मा यस्य सोऽथवा ।
मेघगम्भीरनिनदः सुघोष इति कीर्तितः ॥ ४५८ ॥

सुवृत्तानान्ददातीति सुखं सुखद उच्यते ।
सुखदः खण्डयत्येष दुर्वृत्तानां सुखानि वा ॥ ४५९ ॥

प्रतीकारानपेक्षत्वेऽप्युपकारित्वतः सुहृत् ।
शोभनन्तस्य हृदयमपकारिष्वपीतरे ॥ ४६० ॥

निरस्तातिशयानन्दस्वरूपत्वान्मनोहरः ।
"यो वै भूमा तं"[2]दित्यादिसुखत्वप्रतिपादनात् ॥ ४६१ ॥

---

1 'सकृदेव प्रपन्नाय' इत्यादि विभीषणशरणागतिप्रस्तावे श्रीरामवचनम् ।
2 'तत्सुखं,नाल्पे सुखमस्ति' इति सम्पूर्णश्रुतिः ।

मनोहरो जितक्रोधो वीरबाहुर्विदारणः ॥ ४९ ॥
स्वापनः स्ववशो व्यापी नैकात्मा नैककर्मकृत् ।
वत्सरो वत्सलो वत्सी रत्नगर्भो धनेश्वरः ॥ ५० ॥

---

वि— जितक्रोधो जितो येन क्रोधः, क्रोधवशान्न तु ।
स्थापयन्वेदमर्यादां त्रिदशारीन्निहन्ति सः ॥ ४६२ ॥

वीरबाहुरसौ यस्य बाहू विक्रमशालिनौ ।
बाह्वोश्चेष्टाविशेषेण मन्थनादिष्वितीतरे ॥ ४६३ ॥

विदारयत्यधर्मिष्ठान् वीरानिति विदारणः ।
"समग्रोग्रभये"त्यादिर्विदारणपदा[1] श्रुतिः ॥ ४६४ ॥

मायया सकलान् लोकान् स्वापयन्[2] स्वापनः स्मृतः ।
स्वयं स्वपन् समुद्रेऽन्यानपि स्वापयतीतरे ॥ ४६५ ॥

जगज्जन्मादिहेतुत्वादिहेतुत्वात् स्वतन्त्रः स्ववशः स्मृतः ।
सुतरामवशो भक्तविषयेऽसावितीतरे ॥ ४६६ ॥

व्यापी सर्वगतत्वेन, पुत्रमित्रादिरूपतः ।
विविधव्यापकत्वाच्च व्यापीत्यन्ये प्रचक्षते ॥ ४६७ ॥

जगज्जन्मादिभिस्तिष्ठन् नैकात्माऽसौ विभूतिभिः ।
मत्स्यकूर्मादिरूपेण नैकात्मेत्यपरेऽब्रुवन् ॥ ४६८ ॥

जगज्जन्मादिकर्माणि स कुर्वन्नैककर्मकृत् ।
सेतुबन्धादिकर्माणि कुर्वन्नित्यपरेऽब्रुवन् ॥ ४६९ ॥

वसत्यत्राखिलमिति वत्सरोऽन्ये तु चक्षते ।
अन्तर्वसति सर्वेषां धर्मादिस्थापनाय सः ॥ ४७० ॥

भक्तेषु स्नेहवत्त्वेन वत्सलः परिकीर्तितः ।
"वत्सांसाभ्यां कामबले" इति लच्प्रत्यये कृते ॥ ४७१ ॥

वत्सानाम्पालकत्वेम वत्सी, तस्य जगत्पितुः ।
वत्सभूताः प्रजास्सर्वा इति वासौ तथा स्मृतः ॥ ४७२ ॥

---

1 विदारणपराइति वा पाठः ।
2 'स्वापयन् आत्मसम्बोधविधुरान् कुर्व'न्निति भाष्यम् ।

**धर्मगुब्धर्मकृद्धर्मी सदसत् क्षरमक्षरम् ।**
**अविज्ञाता सहस्रांशुर्विधाता कृतलक्षणः** ॥ ५१ ॥

---

वि — गर्भेऽस्य रत्नानीत्यब्धी **रत्नगर्भः**, परेऽब्रुवन् ।
गर्भादिपापरत्नानि[1] फलविक्रयिणी यतः ॥ ४७३ ॥

धनानामीश्वरत्वेन **धनेश्वर** इति स्मृतः ।
धनं कुचेलादिभ्योऽसौ दातुमीष्ट इतीतरे ॥ ४७४ ॥

गोपयति स्थापयति स्वधर्मानिति **धर्मगुप्** ।
"धर्मसंस्थापनार्थाय सम्भवामी"ति वाक्यतः ॥ ४७५ ॥

धर्माधर्मविहीनोपि मर्यादां स्थापयन् हरिः ।
धर्ममेव करोतीति **धर्मकृत्** परिकीर्तितः ॥ ४७६ ॥

धर्माधारतया **धर्मी** हरि,रन्ये तु चक्षते ।
लोकातिशायिशरणागतरक्षणधर्मवान् ॥ ४७७ ॥

"सदेव सौम्य"वाक्येन **सत्** ब्रह्माऽवितथं परम् ।
लयकाले सर्वमस्मित्[2] सीदतीतीतरेऽब्रुवन् ॥ ४७८ ॥

"वाचारम्भण"मित्यादेरसत् ब्रह्मापरं स्मृतम् ।
न सीदति स्वयं ब्रह्म तस्मादसदितीतरे ॥ ४७९ ॥

"क्षरस्सर्वाणी"ति वाक्यात्सर्वभूतात्मकं **क्षरम्** ।
क्षरत्यस्माच्चलत्येतज्जगत्सर्वमितीतरे ॥ ४८० ॥

**अक्षरं** नाम कूटस्थं कारणं यत्तदप्यसौ ।
पदत्रयं सदित्यस्य विशेषणमितीतरे ॥ ४८१ ॥

**अविज्ञाता** न विज्ञता कर्तृत्वाद्यभिमानवान् ।
भक्तानान्दोषविषय उपेक्षक इतीतरे ॥ ४८२ ॥

**सहस्रांशु**रसावेव मुख्योऽस्यैवांशवो रवौ ।
"यदादित्यगतन्तेजो जग"दित्यादिवाक्यतः ॥ ४८३ ॥

---

1 अस्यार्धस्यार्थो नावगम्यते, मातृकायां दृष्टं लिखितम् ।
2 अस्मिन्नित्यस्य स्थाने अस्मादिति मातृकायां दृश्यते ।

गभस्तिनेमिः सत्त्वस्थः सिंहो भूतमहेश्वरः
आदिदेवो महादेवो देवेशो देवभृद्गुरुः ॥ ५२ ॥

वि— विधातोऽसौ विशेषेण शेषदिग्गजभूधरान् ।
धातृन् समस्तभूतानां दधातीति तथा स्मृतः ॥ ४८४ ॥

नित्यनिष्कळरूपत्वं, शास्त्रं, श्रीवत्सलाञ्छनम् ।
व्यवच्छेदोऽथवा येन कृतः स कृतलक्षणः ॥ ४८५ ॥

गभस्तिनेमिः सूर्यात्मा ज्योतिश्चक्रस्य मध्यगः ।
नेमिलक्षणमेतस्य चक्रं ज्योतिर्मयं परे ॥ ४८६ ॥

प्रकाशकं गुणं सत्त्वं प्राधान्येनाधितिष्ठति ।
यद्वा प्राणिषु सर्वेषु स्थितः सत्त्वस्थ उच्यते ॥ ४८७ ॥

नृशब्दलोपतस्सत्यभामा भामेतिवद्धरिः ।
सिंहो, विक्रमशालित्वात्सिंहव,त्सिंह एव वा ॥ ४८८ ॥

महेश्वरत्वाद्भूतानामेष भूतमहेश्वरः ।
यद्वा भूतेन सत्येन स एव परमेश्वरः ॥ ४८९ ॥

सर्वभूतानि चैतस्मिन्नादावन्त इतीश्वरः ।
आदिश्च देवश्चैवासावादिदेव इति स्मृतः ॥ ४९० ॥

सर्वान्भावान्परित्यज्य ज्ञानैश्वर्ये महत्यसौ ।
महीयते स्वात्मनैव महादेवस्ततः स्मृतः ॥ ४९१ ॥

प्रधान्यतोऽसौ देवनां देवेश इति कीर्तितः ।
"अर्वाग्देवा" इति श्रुत्याप्य "हमादि" रिति स्मृतेः ॥ ४९२ ॥

देवान्बिभर्तीति देवभृच्छक्रस्तस्य शासिता ।
देवानां वाथ विद्यानाम्भरणाद् देवभृद्गुरुः ॥ ४९३ ॥

1 पूर्वार्धे कृतमिति लिङ्गविपरिणामेनान्वयः । व्यवच्छेद इति । सजातीयविजातीयव्यवच्छेदकं लक्षणं सर्वभावानां कृतमनेनेति वा इति भाष्यम् । निष्कलेत्यस्य स्थाने निष्पं भाष्ये ।

उत्तरो गोपतिर्गोप्ता ज्ञानगम्यः पुरातनः ।
शरीरभूतभृद्भोक्ता

उत्तरत्येष संसाराद्दुरुत्कृष्ट इति वोत्तरः ।
भक्तानुत्तारयत्येष संसारादिति चेतरे ॥ ४९४ ॥

गोनामधेयपरत्वेन गोपतिः पालनाद्गवाम् ।
गोः पृथिव्याः पतित्वाद्वा गोपतिः परिकीर्तितः ॥ ४९५ ॥

पालयन् सर्वभूतानि गोप्तेति परिकीर्तितः ।
गोप्तासौ सर्वविद्यानामित्यन्ये तु प्रचक्षते ॥ ४९६ ॥

न कर्मणा गम्यतेऽसौ न ज्ञानसहितेन वा ।
किन्तु ज्ञानेनैव गम्यः ज्ञानगम्य इति स्मृतः ॥ ४९७ ॥

न कालेन परिच्छेद्यः पुरापि भवतीत्यतः ।
"कविं पुराण"मित्यादिवचनात्स पुरातनः ॥ ४९८ ॥

शरीरमूलभूतानां[1] भरणात्प्राणरूपतः ।
शरीरभूतभृत् विश्वरूपदेहधरः परे ॥ ४९९ ॥

भोक्ता सर्वस्य जगतः पालनात्पुरुषोत्तमः ।
स्वरसानन्द[2]सन्दोहसम्भोगाद्वास्य भोक्तृता ॥ ५०० ॥

इति श्रीविष्णुसहस्रनामकारिकायां
पञ्चमं शतकम् ॥

1 'शरीरभूतभूताना'मिति मातृकायां दृश्यते । शरीरारम्भकभूतानां भरणादिति भाष्यम् ॥
2 'स्वरूपानन्दे'ति एकस्मिन् भाष्यपुस्तके, 'परमानन्दे'त्यन्यस्मिंश्च दृश्यते ॥

# षष्ठं शतकम्

कपीन्द्रो भूरिदक्षिणः ॥ ५३

सोमपोऽमृतपः सोमः पुरुजित् पुरुसत्तमः ।
विनयो जयः सत्यसन्धो दाशार्हः सात्त्वतां पतिः ॥ ५४

---

कपिर्वराहश्चेन्द्रोऽसौ वराहवपुरीश्वरः ।
कपीनामिन्द्र इति वा **कपीन्द्रो** रघुनन्दनः ॥ ५०१

अध्वरं धर्ममर्यादास्थापनार्थाय कुर्वतः ।
भूरयो दक्षिणा अस्य वर्तन्ते **भूरिदक्षिणः** ॥ ५०२

**सोमपः** सर्वयज्ञेषु यष्टव्यात्मतयाथवा ।
दर्शयन् धर्ममर्यादां यजमानस्वरूपतः ॥ ५०३

असुरेभ्योऽमृतं रक्षन् पिबन्देवांश्च पाययन् ।
असावमृतपो यद्वा स्वात्मामृतरसं पिबन् ॥ ५०४

सहोमया वर्ततेऽसाविति **सोमो** महेश्वरः ।
ओषधीः पोषयन् सोमश्चन्द्रात्मकतयाथवा ॥ ५०५

**पुरुजित्**[1] सुबहूनेष जयत्यत्राब्रवीन्मुनिः ।
"सत्येन लोकाञ्जयति दीनान्दानेन राघवः" ॥ ५०६

**पुरुश्च**[2] विश्वरूपत्वादुत्कृष्टत्वाच्च सत्तमः ।
पुरुश्चासौ सत्तमश्च कीर्तितः **पुरुसत्तमः** ॥ ५०७

[3]विनयन्दण्डयन् सर्वाः प्रजा **विनय** उच्यते ।
लोकातिशायिविनयं करोतीतीतरेऽब्रुवन् ॥ ५०८

---

1 'पुरुजित्सुखभूरेप' इति मातृकायान्दृश्यते । अस्यार्थो नावगम्यते । पुरून् बहून् जयतीति पुरुजित् इति भाष्यम् ।

2 'पुरुषो विश्वरूपत्वात्' इति मातृकायाम् ।

3 'विनयं दण्डं करोति दुष्टानामिति विनय' इति भाष्यम् ।

**जीवो विनयिता साक्षी मुकुन्दोऽमितविक्रमः ।**
**अम्भोनिधिरनन्तात्मा महोदधिशयोऽन्तकः ॥ ५५ ॥**

---

जयत्यसौ समस्तानि ततो जय इति स्मृतः ।
स्वभक्तैर्जीयत इति जय इत्यपरेऽब्रुवन् ॥ ५०९ ॥
सत्या सन्धाऽस्य सङ्कल्पः सत्यसन्धोऽत्र च श्रुतिः ।
"सत्यप्रतिज्ञ" इत्यादिः "सत्यसङ्कल्प" इत्यपि ॥ ५१० ॥
दानार्थत्वाद्दाशृधातोर्[1]दाशां दानं तमर्हति ।
दशार्हापत्यमिति वा दाशार्ह इति कीर्तितः ॥ ५११ ॥
सात्त्वतस्तान्त्रिकाः केचित्तेषां पतिरसौ हरिः ।
तद्योगक्षेमकारीति सात्त्वताम्पतिरुच्यते ॥ ५१२ ॥
प्राणान् क्षेत्रज्ञरूपेण धारयन् जीव उच्यते ।
भक्ताञ्जीवयतीत्येष जीव इत्यपरेऽब्रुवन् ॥ ५१३ ॥
[2]नियन्तासौ विनयिता साक्षी साक्षाच्च पश्यति ।
यद्वा [3]विनयिता गन्ता चान्याभावादसाक्ष्यसौ ॥ ५१४ ॥
[4]पृषोदरादिसाधुत्वात् मुकुन्दो मोक्षदः स्मृतः ।
दृश्यतेऽत्रापि वचनं "मोक्षमिच्छेज्जनार्दनात्" ॥ ५१५ ॥
विक्रमाः पादविक्षेपास्त्रयो यस्यामिता असौ ।
यद्वाऽमितं यस्य शौर्यं स एषोऽमितविक्रमः ॥ ५१६ ॥
चत्वार्यम्भांसि देवाश्च मनुष्याः पितरोऽसुराः[5] ।
[6]आपो वास्मिन्निधीयन्त इत्यम्भोनिधिरुच्यते ॥ ५१७ ॥

---

1 दाशृधातोरित्यस्य स्थाने 'आश्रयत' इति मातृकायाम् ।

2 'विनयित्वं विनयिता । तांश्च साक्षात्पश्यति प्रजानामिति विनयिता साक्षी' इति भाष्यम् । 'भक्तानां विनयित्वं वरदानाय साक्षात् पश्यतीति विनयिता साक्षी । षष्ठीसमासः' । इति लघुविवरणे च ।

3 'णय गतौ । तृच् । विशिष्य गन्ता विनयिता । आत्मातिरिक्तं वस्तु न पश्यतीत्यसाक्षी' । इति लघुविवरणे ।

4 'मुचेः क्तिनि मुक्तिः, मुक्तिं ददातीति मुकुन्दः' । इति नैरुक्ताः ।

5 संहारसमये एतेषां निधिरित्यर्थः ।

6 अस्मिन् पक्षे समुद्र इत्यर्थः । 'सरसामस्मि सागरः' इति भगवद्वचनात् ।

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५६ ॥

अनन्तात्माऽनवच्छिन्नस्वरूपो देशकालतः ।
शेषस्यात्मतया देवस्तिष्ठतीत्यपरेऽब्रुवन् ॥ ५१८ ॥

संहृत्य सर्वभूतानि कृत्वा चैकार्णवञ्जगत् ।
स्वपित्यब्धौ महत्येष महोदधिशयः शिशुः ॥ ५१९ ॥

अन्तकः सर्वभूतानां करोत्यन्तमिति स्मृतः ।
[1]सङ्कर्षणात्मको रुद्र एषोऽन्तक इतीतरे ॥ ५२० ॥

अजो न जायते यस्मात् "महानज" इति श्रुतेः ।
आद्विष्णोर्जात इपि वा "प्रजनश्चास्मि[2]" वाक्यतः ॥ ५२१ ॥

महः पूजा तदर्हत्वात् महार्ह इति कीर्तितः ।
"अहं स ओमित्यात्मानं युञ्जीते"त्यादिवाक्यतः ॥ ५२२ ॥

[3]स्वाभाव्यो नित्यनिष्पन्नभावाद्भाव्यो न हि स्वतः ।
सु स्वैरमाभिमुख्येन भावनीय इतीतरे ॥ ५२३ ॥

जिता अमित्रा एतस्य रागद्वेषादयोऽरयः ।
बाह्या रावणकंसाद्या जितामित्र इति स्मृतः ॥ ५२४ ॥

स्वात्मामृतरसास्वादान्नित्यमेष प्रमोदते ।
प्रमोदयति वा ध्यातॄन् ध्यानमात्रात् प्रमोदनः ॥ ५२५ ॥

आनन्दात्मतयैवासावानन्द इति कीर्तितः ।
मात्रामेवोपजीवन्ति सर्वभूतानि चास्य[4] हि ॥ ५२६ ॥

---

1 'सङ्कर्षणात्मकं रुद्र'मिति मातृकापाठः ।

2 'प्रजनश्चास्मि कन्दर्पः' इति भगवद्गीतायाम् ।

3 "स्वाभाव्यो नित्यनिष्पन्नः भावात् आभाव्य स्वतः । स्वैरस्स्वामित्याभिमुख्येन भावनीय इतीतरे" । इति मातृकायां दृश्यते । छन्दोभङ्गस्सम्यगवगमयति लेखकप्रमादम् । अतस्तस्यार्थपर्यालोचनं वृथाश्रम एव । भुवो हेतुमण्ण्यन्तात्यति नञ्समासे अभाव्य इति रूपसिद्धिः प्रदर्शिता लघुविवरणे भाष्यानुसारिणि ।

4 अस्य आनन्दस्य ।

महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।
त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥

---

स्वाश्रितान्[1] नन्दयत्येष ततो **नन्दन** उच्यते ।
"एष ह्येवानन्दयति" श्रुतिरेषात्र दृश्यते ॥ ५२७ ॥

**नन्दः** सम्[2]मृद्धस्सर्वाभिरुपपत्तिभिरित्यतः ।
**अनन्दो** वा विषयजं सुखमस्य न विद्यते ॥ ५२८ ॥

गुणा अमोघा अस्येति सत्यधर्मेति कीर्तितः ।
मिथ्या न धर्माः किन्त्वस्य परमार्था इतीतरे ॥ ५२९ ॥

**त्रिविक्रमः** त्रयोऽस्येति त्रिषु लोकेषु विक्रमः ।
यद्वा क्रान्तास्त्रयो लोका येन "त्रीणि पदा" श्रुतेः ॥ ५३० ॥

वेदैकदेशद्रष्टर्षिरयं कृत्स्नस्य दर्शनात् ।
**महर्षिः कपिलाचार्य** आत्मतत्त्वस्य बोधकः ॥ ५३१ ॥

कृतञ्जगत् ज्ञ आत्मेति **कृतज्ञ** उभयात्मकः ।
वेत्त्येव स्वप्रणामादि सापराधेषु चेतरे ॥ ५३२ ॥

"यस्येयं वसुधा भार्या वासुदेवस्य धीमतः" ।
इत्यादिवचनादेव भूपतिर्मेदिनीपतिः ॥ ५३३ ॥

विचक्रमे यतस्त्रीणि पदानि **त्रिपदस्ततः** ।
पदैरोन्तत्सदित्येभिस्त्रिभिर्निर्देशतः परे ॥ ५३४ ॥

गुणावेशेन सञ्जातास्तिस्रोऽवस्था[3] दशाः स्मृताः ।
तासामध्यक्ष इत्येष **त्रिदशाध्यक्ष** उच्यते ॥ ५३५ ॥

प्रळयाम्भोनिधौ मत्स्यरूपी शृङ्गे महत्यसौ ।
नावं बध्वा हि चिक्रीड **महाशृङ्ग** इति स्मृतः ॥ ५३६ ॥

कृतस्यान्तश्च संहारं करोतीति कृतान्तकृत् ।
कृतान्तं मृत्युमथवा कृन्ततीति **कृतान्तकृत्** ॥ ५३७ ॥

---

1 "स्वाश्रिता"नित्यस्य स्थाने 'स्पर्शितान्' इति मातृकायाम् ।

2 'सर्वाभिस्सत्यत्वादिसाधकश्रुत्यादीनामुपपत्तिभिः सम्पन्निवां समृद्ध' इति लघुविवरणे ।

3 अवस्था जाग्रदादय इति भाष्ये ।

अजो महार्हः स्वाभाव्यो जितामित्रः प्रमोदनः ।
आनन्दो नन्दनो नन्दः सत्यधर्मा त्रिविक्रमः ॥ ५१ ॥

अनन्तात्माऽनवच्छिन्नस्वरूपो देशकालतः ।
शेषस्यात्मतया देवस्तिष्ठतीत्यपरेऽब्रुवन् ॥ ५१८ ॥
संहृत्य सर्वभूतानि कृत्वा चैकार्णवञ्जगत् ।
स्वपित्यब्धौ महत्येष महोदधिशयः शिशुः ॥ ५१९ ॥
अन्तकः सर्वभूतानां करोत्यन्तमिति स्मृतः ।
[1]सङ्कर्षणात्मको रुद्र एषोऽन्तक इतीतरे ॥ ५२० ॥
अजो न जायते यस्मात् "महानज" इति श्रुतेः ।
आद्विष्णोर्जात इपि वा "प्रजनश्चास्मि"[2] वाक्यतः ॥ ५२१ ॥
महः पूजा तदर्हत्वात् महार्ह इति कीर्तितः ।
"अहं स ओमित्यात्मानं युञ्जीते"त्यादिवाक्यतः ॥ ५२२ ॥
[3]स्वाभाव्यो नित्यनिष्पन्नभावाद्भाव्यो न हि स्वतः ।
सु स्वैरमाभिमुख्येन भावनीय इतीतरे ॥ ५२३ ॥
जिता अमित्रा एतस्य रागद्वेषादयोऽरयः ।
बाह्या रावणकंसाद्या जितामित्र इति स्मृतः ॥ ५२४ ॥
स्वात्मामृतरसास्वादान्नित्यमेष प्रमोदते ।
प्रमोदयति वा ध्यातॄन् ध्यानमात्रात् प्रमोदनः ॥ ५२५ ॥
आनन्दात्मतयैवासावानन्द इति कीर्तितः ।
मात्रामेवोपजीवन्ति सर्वभूतानि चास्य[4] हि ॥ ५२६ ॥

---

1 "सङ्कर्षणात्मकं रुद्र"मिति मातृकापाठः ।

2 'प्रजनश्चास्मि कन्दर्पः' इति भगवद्गीतायाम् ।

3 "स्वाभाव्यो नित्यनिष्पन्नः भावात् आभाव्य स्वतः । स्वैरस्स्वामित्याभिमुख्ये भावनीय इतीतरे" । इति मातृकायां दृश्यते । छन्दोभङ्गस्सम्यगवगमयति लेखकप्रमादम् । अतस्तस्यार्थपर्यालोचनं वृथाश्रम एव । भुवो हेतुमण्ण्यन्तात्यति नञ्समासे अभाव्य इति रूपसिद्धिः प्रदर्शिता लघुविवरणे भाष्यानुसारिणि ।

4 अस्य आनन्दस्य ।

**महर्षिः कपिलाचार्यः कृतज्ञो मेदिनीपतिः ।**
**त्रिपदस्त्रिदशाध्यक्षो महाशृङ्गः कृतान्तकृत् ॥ ५७ ॥**

---

स्वाश्रितानन्दयत्येष[1] ततो **नन्दन** उच्यते ।
"एष ह्येवानन्दयति" श्रुतिरेषात्र दृश्यते ॥ ५२७ ॥

**नन्दः** समृद्धस्सर्वाभिरुपपत्तिभिरित्यतः[2] ।
**अनन्दो** वा विषयजं सुखमस्य न विद्यते ॥ ५२८ ॥

गुणा अमोघा अस्येति **सत्यधर्मे**ति कीर्तितः ।
मिथ्या न धर्माः किन्त्वस्य परमार्था इतीतरे ॥ ५२९ ॥

**त्रिविक्रमः** त्रयोऽस्येति त्रिषु लोकेषु विक्रमः ।
यद्वा क्रान्तास्त्रयो लोका येन "त्रीणि पदा" श्रुतेः ॥ ५३० ॥

वेदैकदेशद्रष्टर्षिरयं कृत्स्नस्य दर्शनात् ।
**महर्षिः कपिलाचार्य** आत्मतत्त्वस्य बोधकः ॥ ५३१ ॥

कृतज्जगत् ज्ञ आत्मेति **कृतज्ञ** उभयात्मकः ।
वेत्त्येव स्वप्रणामादि सापराधेषु चेतरे ॥ ५३२ ॥

"यस्येयं वसुधा भार्या वासुदेवस्य धीमतः" ।
इत्यादिवचनादेव भूपतिर्**मेदिनीपतिः** ॥ ५३३ ॥

विचक्रमे यतस्त्रीणि पदानि **त्रिपद**स्ततः ।
पदैरोन्तत्सदित्येभिस्त्रिभिर्निर्देशतः परे ॥ ५३४ ॥

गुणावेशेन सञ्जातास्तिस्रोऽवस्था[3] दशाः स्मृताः ।
तासामध्यक्ष इत्येष **त्रिदशाध्यक्ष** उच्यते ॥ ५३५ ॥

प्रळयाम्भोनिधौ मत्स्यरूपी शृङ्गे महत्यसौ ।
नावं बध्वा हि चिक्रीड **महाशृङ्ग** इति स्मृतः ॥ ५३६ ॥

कृतस्यान्तश्च संहारं करोतीति **कृतान्तकृत्** ।
कृतान्तं मृत्युमथवा कृन्ततीति **कृतान्तकृत्** ॥ ५३७ ॥

---

1 'स्वाश्रिता'नित्यस्य स्थाने 'स्पर्शितान्' इति मातृकायाम् ।

2 'सर्वाभिस्सत्यत्वादिसाधकश्रुत्यादीनामुपपत्तिभिः सम्पन्निवां समृद्ध' इति लघुविवरणे ।

3 अवस्था जाग्रदाद्य इति भाष्ये ।

**महावराहो गोविन्दः सुषेणः कनकाङ्गदी ।**
**गुह्यो गभीरो गहनो गुप्तश्चक्रगदाधरः ॥ ५८ ॥**
**वेधाः स्वाङ्गोऽजितः कृष्णो दृढः सङ्कर्षणोऽच्युतः ।**

---

**महावराह** इत्युक्तो वराहश्च महानसौ ।
"ततस्समुत्क्षिप्य धरां स्वदंष्ट्रे"त्यादिवाक्यतः ॥ ५३८ ॥
**गोविन्दो** वेद्यते वाग्भि,र्वेत्ति[1] वेदान्तवाक्यतः ।
समुद्रलग्नान्धरणीं लब्धवानिति चेतरे ॥ ५३९ ॥
**सुषेणः** शोभना लोके [2]सेना यस्य गणात्मिका ।
नित्यसूरिमयी सेना शोभनास्येति चेतरे ॥ ५४० ॥
अङ्गदं कनकेनैव निर्मितं कनकाङ्गदम् ।
तदस्य विद्यत इति गोविन्दः **कनकाङ्गदी** ॥ ५४१ ॥
**गुह्यो** रहस्योपनिषद्विद्यावेद्यतया हरिः ।
निहितो हृदयाकाशे गुहायामिति वा तथा ॥ ५४२ ॥
**गभीरो** नाम गम्भीरो ज्ञानैश्वर्यक्रियादिभिः ।
"न तं विदाथे"ति मन्त्रादज्ञातोऽयमितीतरे ॥ ५४३ ॥
अवस्थात्रयसा[3]क्षित्वाद्दुष्प्रवेशतयाथवा ।
अनिर्णेयस्वतत्त्वत्वाद् **गहनो**ऽयमितीतरे ॥ ५४४ ॥
**गुप्तो**ऽसौ वाङ्मनसयोरगोचरतया हरिः ।
अगुप्तो यस्य माहात्म्यं न गुप्तं स इतीतरे ॥ ५४५ ॥
मनस्तत्त्वात्मक चक्रं बुद्धितत्त्वात्मिकां गदाम् ।
धारयन् लोकरक्षार्थं प्रोक्तश्**चक्रगदाधरः** ॥ ५४६ ॥
**वेधाः** सर्वाणि भूतानि विदधातीति कीर्तितः ।
पृषोदरादित्वेनैव साधुत्वं ज्ञेयमत्र च ॥ ५४७ ॥

---

1 'वेत्ती' ति स्थाने 'यद्वा' इति मातृकायाम् । 'वेत्ति वेदान्तवाक्यैरिति वा गोविन्द' इति भाष्यम्, 'यद्वा गोभिर्वेदान्तवाक्यैर्वेत्ति जीवात्मना पारमार्थिकमात्मस्वरूपं जानातीति गोविन्द' इति लघुविवरणञ्चानुसृत्य अत्र वेत्त्ती ति लिखितम् ॥

2 'सृष्ट्यादौ गुणकालाद्यात्मिका, रामाद्यवतारे वानरादिरूपा वा' इति लघुविवरणे ।

3 साक्षित्वं द्रष्टृत्वम् । तेन दृश्यत्वाभावलाभाद्भगवतो गहनत्वमित्याशयः ।

वरुणो वारुणो वृक्षः पुष्कराक्षो महामनाः ॥ ५९ ॥

---

वि— स्वाङ्गोऽङ्गं कार्यकरणे सहकारि स्वयं यतः।
स्वं धनं हाटकमयमङ्गमस्येति चेतरे ॥ ५४८ ॥

असौ स्वेच्छावतारेषु केनापि न जितोऽजितः।
"ब्रह्मा स्वयम्भू"रित्यादि वाल्मीकिवचनात्स्मृतः ॥ ५४९ ॥

"कृष्णद्वैपायनं व्यासं विद्धि नारायणं स्वयम्"
इत्यादिवचनात् कृष्णः कृष्णद्वैपायनो मुनिः ॥ ५५० ॥

दृढः स्वरूपसामर्थ्यात्प्रोक्तः प्रच्युत्यभावतः।
अदृढः सापराधेपि प्रणतेऽसावितीतरे ॥ ५५१ ॥

प्रजास्संहारसमये युगपत्कर्षतीति च।
कदापि च्यवते नैष इति सङ्कर्षणोऽच्युतः ॥ ५५२ ॥

सायङ्गतो य आदित्यो वरणाद्[1]वरुणस्स वै।
"इमं मे वरुणे"त्यादिमन्त्रवर्णात्स्मृतेरपि ॥ ५५३ ॥

वारुणो वरुणापत्यं वसिष्ठोऽगस्त्य एव वा।
अवारुणोऽस्यावरणकर्मत्व[2]न्नेति चेतरे ॥ ५५४ ॥

वृक्षो "वृक्ष इव स्तब्धो[3] दिवि तिष्ठति" वाक्यतः।
"निवासवृक्षस्साधूना"मिति वाक्यादितीतरे ॥ ५५५ ॥

व्याप्[4]त्यर्थादक्षतेर्धातोः पुष्करोपपदादणि।
पुष्कराक्षो हृदाख्याब्जे चिन्तितो वा प्रकाशते ॥ ५५६ ॥

---

1 वारणात् सर्वरश्मीनां संवरणात्।

2 आवरणकर्मत्वम् आवरणक्रियायाः कर्मत्वम्।

3 स्तब्धः अचलः।

4 'पुष्करं व्योम। तदक्ष्णोति व्याप्नोतीति पुष्कराक्षः, यद्वा पुष्करे हृदयपुण्डरीके व्याप्नोति चिन्तितरूपेण प्रकाशत इति पुष्कराक्षः। पचाद्यजन्तेन सप्तमीसमास इति लघुविवरणे।

भगवान् भगहा नन्दी वनमाली हलायुधः ।
आदित्यो ज्योतिरादित्यः सहिष्णुर्गतिसत्तमः ॥ ६० ॥

---

वि — मनसैव जगत्सृष्टिं संहारञ्च करोति यः ।
रक्षणं सर्वजगतां विष्णुरेष महामनाः ॥ ५५७ ॥

समग्रैश्वर्यवीर्यश्रीयशोज्ञानविरक्तयः ।
उत्पत्त्यादिविवेको वा यस्यासौ भगवान् स्मृतः ॥ ५५८ ॥[1]

भगहा हन्ति संहारकाले वीर्यादिकान् गुणान् ।
ज्ञानैश्वर्यादिगतिमान् भगहेत्यपरेऽब्रुवन् ॥ ५५९ ॥

आनन्दी सुखरूपत्वात्समृद्धेस्सम्पदोऽथवा ।
नन्दगोपेन पितृमान् नन्दीत्यन्ये प्रचक्षते ॥ ५६० ॥

वनमाली वहन्मालां भूततन्मात्ररूपिणीम् ।
"वनमाली गदी शार्ङ्गी शङ्खी चक्री"ति दर्शनात् ॥ ५६१ ॥

हलमायुधमस्येति बलभद्रो हलायुधः ।
"बलभद्रं समृध्यर्थी सीरकर्मणि कीर्तयेत्[2]" ॥ ५६२ ॥

आदित्यः काश्यपाज्जातस्त्वदित्यां वामनो हरिः ।
अदितिर्देवकीरूपा तस्यामित्यपरेऽब्रुवन् ॥ ५६३ ॥

ज्योतिरादित्य इत्युक्तः स्थितस्सवितृमण्डले ।
(आदित्यं वाचकादित्यः प्राप्य इत्यपरेऽब्रुवन् ?) ॥ ५६४ ॥

सहिष्णुः सहते द्वन्द्वं शीतोष्णादिकमित्यतः ।
तथैव परदो देवो जितक्रोधो जितेन्द्रियः ॥ ५६५ ॥

गतिश्च सत्तमश्चेति भगवान् गतिसत्तमः ।
विज्ञानस्यायमुत्कृष्टं फलमित्यपरेऽब्रुवन् ॥ ५६६ ॥

---

1 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ।' इति विष्णुपुराणम् ।

2 सिञ्चयेदिति क्वचित् ।

सुधन्वा खण्डपरशुः दारुणो द्रविणप्रदः ।
दिविस्पृक् सर्वदृग्व्यासो वाचस्पतिरयोनिजः ॥ ६१ ॥
त्रिसामा सामगः साम निर्वाणं भेषजं भिषक् ।

---

वि— सुधन्वा शोभनं शार्ङ्गमिन्द्रियादिमयं धनुः ।
समुद्रशोषणादौ च सामर्थ्यं यस्य विद्यते ॥ ५६७ ॥

स खण्डपरशुः यस्य परशुः शत्रुखण्डकः ।
अखण्डपरशुर्जामदग्न्योऽकुण्ठायुधोऽथवा ॥ ५६८ ॥

दारुणः कथितो विष्णुरसन्मार्गविदारणात् ।
(व्यासावतारनामानि त्विदमादीति चेतरे ?) ॥ ५६९ ॥

भक्तेभ्यः प्रददातीति द्रविणं द्रविणप्रदः ।
शास्त्रादिरूपद्रविणं प्रददातीति चेतरे ॥ ५७० ॥

दिविस्पृक्[1] दिवि संस्पर्शान्निवासात्परमे पदे ।
सतत्त्वं स्पृशतीत्याहुः परया विद्ययेतरे ॥ ५७१ ॥

सर्वाकारज्ञानरूपः सर्वद्रष्टेति वा तथा ।
विस्तारकश्च वेदादेः सर्वदृग्व्यास उच्यते ॥ ५७२ ॥

पतिश्च वाचो विद्याया योन्याश्चैव न जायते ।
इत्यतः कारणात्प्रोक्तो वाचस्पतिरयोनिजः ॥ ५७३ ॥

रथन्तरेण बृहता वामदेव्येन सामभिः ।
वेतव्रतसमाख्यातैः त्रिसामा संस्तुतस्त्रिभिः ॥ ५७४ ॥

सामगोऽसौ साम तादृग्गायतीति प्रकीर्तितः ।
"साम गायन्नास्त" इति "हा बुद्दे"त्यादिदर्शनात् ॥ ५७५ ॥

सामेत्युक्तस्सामवेदो "ब्राह्मणाना"मिति श्रुतेः ।
"वेदानां सामवेदोऽस्मी"त्येवं भगवतः स्मृतेः ॥ ५७६ ॥

---

1 दिवःस्पृगिति मुद्रितभाष्यपुस्तकपाठः ।

सन्न्यासकृच्छमः[1] शान्तो निष्ठा शान्तिः परायणम् ॥ ६२ ॥
शुभाङ्गः शान्तिदः स्रष्टा कुमुदः कुवलेशयः ।

---

वि— निर्वाणं परमानन्दो दुःखोपशमनात्मकः ।
"आनन्दो ब्रह्म" वचना "दमृतश्चैव" वाक्यतः ॥ ५७७ ॥

भेषजश्चैष संसाररोगस्यौषधमित्यतः ।
वेदा देवर्षयश्चैव यं विदुर्दुःखभेषजम् ॥ ५७८ ॥

भिषक् संसाररोगस्य परान्निर्मोक्षकारिणीम् ।
विद्यामुपदिशत्येष गीतासूपनिषत्सु च ॥ ५७९ ॥

सन्न्यासकृत् स मोक्षार्थं कृतवान्तुर्यमाश्रमम् ।
संसारन्तद्वतामेष कृन्ततीतीतरेऽब्रुवन् ॥ ५८० ॥

शमः शमयिता सर्वभूतानां, ज्ञानसाधनम् ।
शमं यतीनामाचष्ट प्राधान्येनेति वा शमः ॥ ५८१ ॥

शान्तो वैषयिकेष्वेष सुखेष्वासक्त्यभावतः ।
"निष्कळं निष्क्रियं शान्त" मित्यादिश्रुतिवाक्यतः ॥ ५८२ ॥

निष्ठाऽस्मिन् सर्वभूतानि तिष्ठन्ति नितरां लये ।
तिष्ठन्ति निवरामस्मींस्त्यक्तकामा इतीतरे ॥ ५८३ ॥

शान्तिः समस्ताविद्यानां निवृत्तिर्ब्रह्म सैव हि ।
त्यक्तसर्वेषणा यस्मिन् शाम्यन्तीत्यपरेऽब्रुवन् ॥ ५८४ ॥

परमुत्कृष्टमयनं पुनरावृत्तिवर्जितम् ।
परायणं बहुव्रीहिः[2] पुल्लिङ्गं पठते यदि ॥ ५८५ ॥

शुभाङ्गो धारयन्मूर्तिं शोभनां प्रियदर्शनाम् ।
योगाङ्गानि शुभान्यस्मादित्यन्ये तु प्रचक्षते ॥ ५८६ ॥

---

1 'तत्करोति तदाचष्ट' इति णिचि पचाद्यचि कृते रूपं शम इति, इति भाष्यम् ।
2 परं अयनं वैकुण्ठाख्यं स्थानं यस्येति बहुव्रीहिर्बोध्यः ।

गोहितो गोपतिः गोप्ता वृषभाक्षो वृषप्रियः ॥ ६३ ॥

वि— रागद्वेषादिनिर्मोक्षलक्षणां शान्तिमच्युतः।
शान्तिदः प्रददातीति, मोक्षरूपामितीतरे ॥ ५८७ ॥

स्रष्टा सर्वाणि भूतानि सर्गादौ सृष्टवानिति।
"ससर्जोच्चावचान्यादौ" इत्यादिस्मृतिवाक्यतः ॥ ५८८ ॥

कुमुदो मोदते चासौ पृथिव्यां, प्राह तन्मुनिः।
"कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह" ॥ ५८९ ॥

वदरे[1] तक्षकोऽम्भोधिशेषयोः स्वात्मनेति च।
वदरोदकसर्पेषु शयनात् कुवलेशयः ॥ ५९० ॥

गोहितो धृतवान्शैलं यो गवामभिवृद्धये।
भूमेस्संरक्षणार्थं वा कुर्वन्देहपरिग्रहम् ॥ ५९१ ॥

गोपतिर्भूपती रामो धियाम्पतिरितीतरे।
"धियाम्पतिर्लोकपतिर्धरापति"रिति स्मृतेः ॥ ५९२ ॥

गोप्ता जगद्रक्षतीति स्वात्मानं संवृणोति वा।
"रक्षिता जीवलोकस्य स्वजनस्ये"ति वाक्यतः ॥ ५९३ ॥

वृषभाक्षो धर्मदृष्टिर्वेष्टवर्षुकलोचनः[2]।
धर्मस्य भावो यस्याक्षिव्यापारादिति चेतरे ॥ ५९४ ॥

वृषप्रियः प्रियो यस्य धर्मोऽन्ये सेचनप्रियः।
यद्वा प्रियो वृषयतामुपेय इति चक्षते। ॥ ५९५ ॥

---

1 वदरे वदरीफले तक्षकः तक्षकस्सन्। तदात्मनेति यावत्। तक्षको हरेर्विभूतिः। कोः क्षितेर्वलनात् जलस्य, कौ भूम्यां वलते संभवत इति सर्पाणामुदरस्य च कुवलशब्दार्थत्वं भाष्योक्तं बोध्यम्।

2 वेष्टेत्यत्र वा इष्टेति छेदः। मातृकायां धर्मस्य भावमिति दृश्यते। भानमिति वा पाठः।

अनिवर्ती निवृत्तात्मा सङ्क्षेप्ता क्षेमकृच्छिवः ।

---

वि— देवासुरादिसङ्ग्रामान्न निवर्तत इत्यतः ।
अनिवर्त्यथवा धर्मान्न निवर्तत इत्यतः ॥ ५९६ ॥

निवृत्तात्मास्य विषयान्निवृत्तम्मन इत्यतः ।
गुणान्निवृत्तो जीवो यच्चिन्ताभावादितीतरे ॥ ५९७ ॥

सङ्क्षेप्ता सङ्क्षिपन् सूक्ष्मरूपेण जगदन्ततः ।
असङ्क्षिपन्नसङ्क्षेप्ता भक्तज्ञानमितीतरे ॥ ५९८ ॥

उपात्तरक्षणं क्षेमस्तत्कुर्वन् क्षेमकृत् स्मृतः ।
अक्षेमकृत्कृन्ततीति भक्ताक्षेममितीतरे ॥ ५९९ ॥

शिवोऽसौ पावयन् सर्वान् स्वनामस्मृतिमात्रतः ।
"शाश्वतं शिव"मित्यादेरन्य आहुश्शिवश्शुभः ॥ ६०० ॥

इति श्रीविष्णुसहस्रनामकारिकायां
षष्ठ शतकम् ॥

# सप्तमं शतकम्

श्रीवत्सवक्षाः श्रीवासः श्रीपतिः श्रीमतां वरः ॥ ६४ ॥

श्रीदः श्रीशः श्रीनिवासः श्रीनिधिः श्रीविभावनः ।

---

वि— श्रीवत्सलक्षणं चिह्नं वक्षस्यस्य स्थितं यतः ।
श्रीवत्सवक्षा "नित्यश्रीरजय्य" इति वाक्यतः ॥ ६०१ ॥

श्रीवासो निवसत्यस्य श्रीर्वक्षस्यनपायिनी ।
सर्वकान्त्यावासभूतो लक्ष्म्याः पतिरितीतरे ॥ ६०२ ॥

श्रीरेनं वरयामास परित्यज्याखिलमन्यने ।
देवादीन् श्रीपतिः तस्मात् श्रीः परा शक्तिरेव वा ॥ ६०३ ॥

"[1]ऋचस्सामानि" वचनादृग्यजुस्सामलक्षणा ।
श्रीः, तद्वतां प्रधानत्वादच्युतः श्रीमतां वरः ॥ ६०४ ॥

श्रीदः श्रियन्ददातीति परमानन्दलक्षणाम् ।
[2]श्रीदाः ब्रह्मादयस्तेषां श्रिय ईश इतीतरे ॥ ६०५ ॥

श्रिय ईशतया श्रीशो [3]भगवान्विष्णुरुच्यते ।
"[4]ईक्षतेर्ने"ति वाक्याच्चेशोऽविद्याया इतीतरे ॥ ६०६ ॥

श्रीशब्देन तु तद्वन्तो लक्ष्यन्ते तेषु सर्वदा ।
वसतीति श्रीनिवासो, नित्यवासश्श्रियः परे ॥ ६०७ ॥

---

1 'ऋचस्सामानि यजूंषि सा हि श्रीरमृता सता'मिति श्रुतिः ।

2 इतरे 'श्रीदश्श्रीश' इत्येकनामेति ये वदन्ति ते ।

3 अस्य पादस्य स्थाने 'नामैकत्व इयं स्मृतिः' इति मातृकायां दृश्यते । साधुतास्य चिन्त्या ।

4 श्रीः भगवच्छक्तिरविद्या । भगवदीक्षणेनैव अविद्यायाः जगद्रूपेण परिणामः । न तु स्वत इति 'ईक्षतेर्नाशब्द'मिति सूत्रेण सूचितमिति भगवान् श्रीश इति भावः ।

श्रीधरः श्रीकरः श्रेयः श्रीमाँल्लोकत्रयाश्रयः ॥ ६५ ॥
स्वक्षः स्वङ्गः शतानन्दो नन्दिर्ज्योतिर्गणेश्वरः ।

---

वि— श्रीनिधिः शक्तिमत्यस्मिन्निधीयन्ते श्रियोऽखिलाः ।
श्रीर्गोप्या निधिवद्यस्य स श्रीनिधिरितीतरे ॥ ६०८ ॥

सर्वेषामपि भूतानां तत्तत्कर्मानुरूपतः ।
श्रियो विभाजयन्नुक्तो विविधाः श्रीविभावनः ॥ ६०९ ॥

जननीं सर्वभूतानामीश्वरीं वक्षसि श्रियम् ।
धारयन् श्रीधरः, सर्वं श्रिया धारयतीतरे ॥ ६१० ॥

स्मरतां स्तुवतां लोके तथा कीर्तयतामपि ।
श्रियं करोति भक्तानामित्यतः श्रीकरः स्मृतः ॥ ६११ ॥

अनपायिसुखावाप्तिलक्षणं श्रेय उच्यते ।
श्रेयःश्रीमान् श्रेयसेऽस्मै[1] श्रयते श्रीरितीतरे ॥ ६१२ ॥

श्रीर्विद्यते परा शक्तिरस्य श्रीमानतः स्मृतः ।
"परास्य शक्तिर्विविधे"त्यादिश्रुतिनिदर्शनात् ॥ ६१३ ॥

लोकत्रयाश्रयो लोकत्रयस्याश्रय इत्यतः ।
लोकत्रयाश्रयां लक्ष्मीमभितस्सन्नितीतरे[2] ॥ ६१४ ॥

शोभने पुण्डरीकाभे अक्षिणी स्वक्ष इत्यतः ।
"स्वस्थिरं पुण्डरीकाक्ष"मित्यादिषु च दर्शनात् ॥ ६१५ ॥

स्वङ्गोऽस्याङ्गानि सर्वाणि शोभनानि भवन्ति हि ।
विपुलांसो महाबाहु"रित्यादिश्रुतिवाक्यतः ॥ ६१६ ॥

एकः परानन्द एवोपाधिभेदेन भिद्यते ।
शतानन्दोऽत "एतस्यैवानन्दस्ये"ति च श्रुतेः ॥ ६१७ ॥

---

1 अस्मैति षष्ठी इममित्यर्थे । 2 इतरे श्रीमाँल्लोकत्रयाश्रय इति सविशेषणमेकनामेति मन्वानाः ।

विजितात्मा विधेयात्मा सत्कीर्तिश्छिन्नसंशयः ॥ ६६ ॥
उदीर्णः सर्वतश्चक्षुरनीशः शाश्वतस्थिरः ।

---

वि— परमानन्दरूपत्वात् नन्दिरित्युच्यते हरिः ।
लक्ष्म्या स्वतन्त्रया यश्च नन्दयन्ते नर्प्यते परे ॥ ६१८ ॥

ज्योतिर्गणानामीशत्वाद् हरिः ज्योतिर्गणेश्वरः ।
"तमेव भान्तमनुभाती"त्यादिश्रुतिवाक्यतः ॥ ६१९ ॥

विजितं मन आत्मास्य विजितात्मा सदोदितः ।
सीतायां प्रवणश्चैतो यस्यासाविति चेतरे ॥ ६२० ॥

विधेयात्मा [2]येन केन विधेयं रूपमस्य सत् ।
न केवलन्तत्प्रवणं मन आत्मापि चेतरे ॥ ६२१ ॥

सत्कीर्तिः सत्यवितथा कीर्तिरस्येति कीर्तितः ।
लक्ष्म्याः पतित्वेन सती कीर्तिरस्याधिकेऽन्तरे ॥ ६२२ ॥

करामलकवत्सर्वं साक्षात्कृतवतो हरेः ।
संशयः [3]कोपि नास्तीति छिन्नसंशय उच्यते ॥ ६२३ ॥

उदीर्णस्सर्वभूतेभ्यस्समुद्रिक्तत्वतो हरिः ।
दुर्ग्रहोपि गतश्चक्षुर्ग्राह्यतामपि चेतरे ॥ ६२४ ॥

सर्वतः सर्वतश्चक्षुः स्वचैतन्येन पश्यति ।
सर्वज्ञ,"विश्वतश्चक्षुरुत विश्वत"इत्यतः ॥ ६२५ ॥

"न तस्येऽशे कश्चने"ति श्रुत्याऽनीश इति स्मृतः ।
"न त्वत्समोऽस्त्यभ्यधिकः कुतोन्य" इति च स्मृतेः ॥ ६२६ ॥

---

1 अस्येति मनेनेत्यर्थः । भाष्ये येनेति दर्शनात् ।

2 येन केनेति — शिलासुवर्णादिनेत्याशयः । यद्वा तत्तदुपासकेन । भाष्ये तु न केनापि विधेय आत्मा स्वरूपमस्येति 'अविधेयात्मा' इति दृश्यते । तथैव लघुविवरणेऽपि ।

3 भाष्ये कापीति दृश्यते ।

भूशयो भूषणो भूतिर्विशोकः शोकनाशनः ॥ ६७ ॥
अर्चिष्मानर्चितः कुम्भो विशुद्धात्मा विशोधनः ।

---

वि— विक्रियान्न कदाप्येति हरिश्शश्वद्भवन्नपि ।
शाश्वतस्थिर इत्युक्तो नामैकं सविशेषणम् ॥ ६२७ ॥

अन्वेषमाणो लङ्कायाः पन्थानं सागरं प्रति ।
भूमौ शेत इति प्रोक्तो भूशयो रघुनन्दनः ॥ ६२८ ॥

स्वेच्छावतारैर्बहुभिर्भूषयन् भूषणो महीम् ।
सर्वभूषणभूषार्हो भूषणोऽयमितीतरे ॥ ६२९ ॥

भूतिः सत्ता, विभूतिर्वा भूतिहेतुतया हरिः ।
अभूतिर्भूतिकाङ्क्षापि[1] नास्य भक्तेष्वितीतरे ॥ ६३० ॥

विशोकः शोकराहित्यात्परमानन्दभावतः ।
भक्तानां विगतश्शोको यस्मात्स इति चेतरे ॥ ६३१ ॥

स्मृतिमात्रेण सर्वेषां भक्तानां शोकनाशनः ।
दर्शनान्नाशयेच्छोकं स्वादर्शनकृतं परे ॥ ६३२ ॥

अर्चिषा चन्द्रसूर्याद्या अर्चिष्मन्तो यदीयया ।
मुख्योऽर्चिष्मान् स उक्त''स्तमेव भान्तमनु''श्रुतेः ॥ ६३३ ॥

अर्चितः स विरिञ्चाद्यैस्सर्वैर्लोकार्चितैरपि ।
अर्चात्विस्त्यवतारोऽस्य[2] सञ्जात इति चेऽतरे ॥ ६३४ ॥

कुम्भः कुम्भवदेवास्मिन् यतस्सर्वं प्रतिष्ठितम् ।
कौ पुष्करादिके क्षेत्रे भाति ध्यानादितीतरे ॥ ६३५ ॥

गुणत्रयस्य राहित्याद् विशुद्धात्मोच्यते हरिः ।
विशुद्धे हृद्गेऽस्यात्मा स्वरूपमिति नेतरे ॥ ६३६ ॥

---

1 अस्य भक्तेष्वपि भूतिकाङ्क्षा न, किं पुनरस्मिन्निति भावः ।

2 अर्चा आराधनार्थं प्रतिष्ठिता भगवन्मूर्तिः ।

अनिरुद्धोऽप्रतिरथः प्रद्युम्नोऽमितविक्रमः ॥ ६८ ॥
कालनेमिनिहा वीरः[4] शौरिः शूरजनेश्वरः ।

वि— स्मृतिमात्रेण पापानां क्षपणास्य विशोधनः ।
अविशोधन इत्याहुर्दुष्टाघांऽनाशनात्परे ॥ ६३७ ॥

अनिरुद्धः चतुर्व्यूह,[1] इतरे त्वब्रुवन्निति ।
[2]क्षेत्रेषु पुष्करायेषु रुद्धो ह्यस्य न विद्यते ॥ ६३८ ॥

एषोऽप्रतिरथो यस्य प्रतिपक्षो न विद्यते ।
"यो रामं प्रतियुध्येत न तं पश्यामि" वाक्यतः ॥ ६३९ ॥

प्रकृष्टं द्युम्नमस्येति प्रद्युम्नो व्यूहमध्यगः ।
आत्मप्रद्योतनादेष प्रद्युम्न इति चेतरे ॥ ६४० ॥

अमितो विक्रमो यस्य स एषोऽमितविक्रमः ।
"यामुनं जलमासाद्य देवे" त्यादिषु दर्शनात् ॥ ६४१ ॥

कालनेमिनिहा दैत्यं हतवान् कालनेमिनम्[3] ।
नेमिनिहन्त्यविद्याख्यां कालचक्रस्य चेतरे ॥ ६४२ ॥

वीरोऽसुरान्विजित्यैष विराजत इति स्मृतः ।
कश्चिच्छौरिर्वीर इति पठति व्यत्ययेन हि ॥ ६४३ ॥

शौरिः शूरकुलोत्पत्त्या केशवोऽत्राप्युदाहृतिः ।
(उत्पलायतके देशे शौरिसंज्ञोऽच्युतः स्थितः!) ॥ ६४४ ॥

सङ्कन्दनादयश्शूरजनास्तेषामपीश्वरः ।
शौर्यातिशयवत्त्वेन देवश्शूरजनेश्वरः ॥ ६४५ ॥

---

1 चतुर्व्यूहेषु चतुर्थो व्यूह अनिरुद्धः । न रुध्यते शत्रुभिः कदाचिदिति वा इति भाष्यम् ।

2 पुष्करादेषु अस्य क्षेत्रेषु रुद्धः बद्धः न विद्यते । सर्वे तत्क्षेत्रोपासका मुक्ता एवेत्यर्थः ।

3 भाष्ये 'कालनेमिम्' इति इकारान्ततया पठितम् ।

4 कालनेमिनिहा शौरिश्शूरः इति केरळीयपाठः ।

**त्रिलोकात्मा त्रिलोकेशः केशवः केशिहा हरिः ॥ ६१ ॥**
**कामदेवः कामपालः कामी कान्तः कृतागमः ।**

वि— लोकत्रयान्तर्यामित्वात् **त्रिलोकात्मा**ऽथवा त्रयः ।
लोका अस्मान्न भिद्यन्ते परमार्थत इत्यतः ॥ ६४६ ॥

त्रयो लोकास्तदाज्ञप्ता वर्तन्ते स्वेषु वर्त्मसु ।
तस्मात् **त्रिलोकेश** इति प्रोक्तो विष्णुर्विचक्षणैः ॥ ६४७ ॥

केशास्सूर्यादिसङ्क्रान्ता अंशवोऽस्येति **केशवः** ।
ब्रह्मविष्णुशिवाख्याताश्शक्तयो यस्य सोऽथवा ॥ ६४८ ॥

केशिनं हतवान्दैत्यमित्यतः **केशिहा हरिः** ।
"केशवं केशिहन्तार"मित्यादिषु च दर्शनात् ॥ ६४९ ॥

स सहेतुकसंसारहरणाद् **हरि**रुच्यते ।
हविषो हरणाद्वा वर्णतो वा हरिः स्मृतः ॥ ६५० ॥

वाञ्छद्भिरपि धर्मादीन् कामः काम्यत इत्यतः ।
असौ कामश्च देवश्च **कामदेव**स्ततः स्मृतः ॥ ६५१ ॥

**कामपालः** कामिनां स कामान् पालयतीत्यतः ।
काम्यन्त इत्यतः कामा भक्तास्तानिति चेऽतरे ॥ ६५२ ॥

पूर्णकामस्वभावत्वात् **कामी**,च्छा [2] भक्तिगोचरा ।
विद्यते सर्वदाऽस्येति कामीत्यन्ये प्रचक्षते ॥ ६५३ ॥

अभिरूपतमन्देहं वहन् **कान्त** इति स्मृतः ।
"सर्वाङ्गसुन्दरं हृद्य"मित्यादिमुनिवाक्यतः ॥ ६५४ ॥

---

1 केशशब्दस्य अंशुवाचकत्वे महाभारतं, शक्तिवाचकत्वे श्रुत्यादि च प्रमाणं प्रदर्शितवन्तो भाष्यकाराः । 'को ब्रह्मेति समाख्यात ईशोऽहं सर्वदेहिनाम् । आवां तवांशसम्भूतौ तस्मात्केशवनामवान् ॥' इति हरिवंशोक्त्यनुसारेणार्थान्तरमपि ते प्रादर्शयन् ।

2 भक्तगोचरा इति वा पाठः ।

अनिर्देश्यवपुर्विष्णुर्वीरोऽनन्तो धनञ्जयः ॥ ७० ॥
ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ।

---

वि— श्रुतिस्मृत्यागमास्तेन कृतास्तस्मात् कृतागमः ।
"श्रुतिस्मृती ममैवाज्ञे[1] यस्ते" इत्यादिवाक्यतः ॥ ६५५ ॥

इदन्तदिति निर्देष्टुं रूपमस्य न शक्यते ।
गुणाद्यभावादेवायमनिर्देश्यवपुः स्मृतः ॥ ६५६ ॥

व्याप्यास्य रोदसी कान्तिः विष्णुरभ्यधिकेत्यतः ।
"व्याप्ता मे रोदसी पार्थ कान्ति"रित्यादिवाक्यतः ॥ ६५७ ॥

वी गतिः प्रजनं कान्तिरसनं खादनन्तथा ।
अर्था इमे वै [2]वीधातोस्तद्वत्त्वाद् वीर उच्यते ॥ ६५८ ॥

देशतस्त्वपरिच्छेदाद्वस्तुतः कालतोपि च ।
[3]अनन्तः प्रोच्यते "ज्ञानमनन्तं ब्रह्म"वाक्यतः ॥ ६५९ ॥

धनञ्जयो दिग्विजये प्रभूतमजयद्धनम् ।
ततोऽर्जुनः "पाण्डवानान्धनञ्जय"इति स्मृतेः ॥ ६६० ॥

तपो विप्राश्च यज्ञाश्च [4]वेदाश्च ब्रह्मसंज्ञिताः ।
तेभ्यो हितत्वाद् ब्रह्मण्यो, ब्रह्म जीव इतीतरे ॥ ६६१ ॥

तपोयज्ञादि कुरुत इति ब्रह्मकृदुच्यते ।
प्रकृतिं विस्तरत्वेन करोतीतीतरेऽब्रुवन् ॥ ६६२ ॥

---

1 उल्लङ्घ्य वर्तते । "आज्ञाच्छेदी मम द्वेषी मद्भक्तोपि न वैष्णवः" इति शिष्टो भागः ।

2 वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति धातुपाठः । 'अस्माद्धातोस्सम्पदादि-क्विपि वी गत्यादिः । रा दाने । धातूनामनेकार्थत्वादयमादानार्थः । वियो रात्यादत्त इति वीरः । यद्वा विय ईर्ते प्राप्नोतीति वीरः । ईर गतौ । कर्मण्यण् । मत्वर्थीयो रस्तु दुर्लभः" इति लघुविवरणे ।

3 'गन्धर्वाप्सरसस्सिद्धाः किन्नरोरगचारणाः । नान्तं गुणानां गच्छन्ति तेनानन्तोऽयमव्ययः ॥' इति विष्णुपुराणवचनाद्वा अनन्तः इत्यपि भाष्ये । न विद्यते अन्तोऽस्येत्यनन्तः इत्यपि लघुविवरणे ।

4 वेदाश्चेत्यस्य स्थाने देवाश्चेति मातृकायाम् । भाष्यादौ तु वेदा इत्येव दृश्यते । यज्ञस्थाने ज्ञानमिति च ।

**ब्रह्मविद्ब्राह्मणो ब्रह्मी ब्रह्मज्ञो ब्राह्मणप्रियः ॥ ७१ ॥**

**महाक्रमो महाकर्मा महातेजा महोरगः ।**

---

ब्रह्मा ब्रह्मात्मना सर्वं सृजतीति, तरेऽब्रुवन् ।
एकं नानात्विदं ब्रह्मा ब्रह्म ब्रह्मविवर्धनः ॥ ६६३ ॥

प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।
वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ ६६४ ॥

विवर्धयति यज्ञादि ततो ब्रह्मविवर्धनः ।
विरिञ्चस्य च जीवानां ब्रह्म वर्धयतीतरे ॥ ६६५ ॥

ब्रह्म वेदञ्च वेदार्थं वेत्तीति ब्रह्मवित् स्मृतः ।
“एकस्त्वेद भगवान्धाता नारायणस्स्वयम् ॥ ६६६ ॥

सर्वेषामिह लोकानां वेदव्यासादिरूपतः ।
कुर्वन्प्रवचनं वेदानामयं ब्राह्मणो हरिः ॥ ६६७ ॥

ब्रह्मसंज्ञितशेषित्वाद् ब्रह्म्यन्ये[2] तु विपश्चितः ।
सर्वं ब्रह्मेति वचनात्सर्वस्वामीति चक्षते ॥ ६६८ ॥

वेदानां स्वात्मभूतानां ज्ञानाद् ब्रह्मज्ञ उच्यते ।
“वेदान्तकृद्वेदविदेव”त्यादिभगवत्स्मृतेः ॥ ६६९ ॥

ब्राह्मणानां प्रियत्वेन ब्राह्मणप्रिय उच्यते ।
यस्य प्रिया ब्राह्मणास्स इत्यन्ये तु प्रचक्षते ॥ ६७० ॥

**महाक्रमो** महानस्य पादविक्षेप इत्यतः ।
अस्य स्वभक्तिमाप्यत्वे महान् क्रम इतीतरे ॥ ६७१ ॥

महत्कर्मास्य सृष्ट्यादि **महाकर्मे**त्यतः स्मृतः ।
महत् ज्ञानप्रदं कर्म यस्माज्जन्तोरितीतरे ॥ ६७२ ॥

---

1 विष्णुपुराणस्थमिदं पद्यम् ।

2 ब्रह्मी अन्ये इति छेदः । ब्रह्मसंज्ञिताः पूर्वोक्तास्तपोवेदादयः । ब्रह्मज्ञानोपयोगित्वात्ते ब्रह्मशेषा इति भावः ।

महाक्रतुर्महायज्वा महायज्ञो महाहविः ॥ ७२ ॥
स्तव्यः स्तवप्रियः स्तोत्रं स्तुतिः स्तोता रणप्रियः ।

शौर्यवीर्यादिभिर्धर्मैर्वृद्धिस्समलङ्कृतः ।
महातेजाः महत्तेजस्सूर्यादिगतमस्य वा ॥ ६७३ ॥

महोरगो महांश्चासावुरगश्चेति वासुकिः[1] ।
महाञ्छेषादिरुरगो यद्विभूतिरितीतरे ॥ ६७४ ॥

महांश्चासौ क्रतुश्चेति ह्यश्वमेधो महाक्रतुः ।
यद्वाराधनभूतोऽस्य त्वश्वमेधादिकः क्रतुः ॥ ६७५ ॥

महायज्वा महांश्चासौ यज्वा लोकस्य सङ्ग्रहात् ।
यद्वा महान्तो यज्वानो विद्यन्ते यस्य स स्मृतः ॥ ६७६ ॥

महायज्ञो महांश्चासौ यज्ञश्चेति जपात्मकः[2] ।
महान्तो देवयज्ञाद्या ज्ञानयज्ञोऽथवाऽस्य यत् ॥ ६७७ ॥

महच्च तद्धविश्चेति ब्रह्मात्मन्येव हूयते[3] ।
जगदात्मतया सर्वमित्यतस्स महाहविः ॥ ६७८ ॥

स्तव्योऽसौ स्तूयते सर्वैरिति स्तोता न कस्यचित् ।
"इतीदं कीर्तनीयस्य केशवस्ये"ति वाक्यतः ॥ ६७९ ॥

स्तवप्रियः प्रियस्तोत्रस्तवनीयः, स्तवास्तु ये ।
ते प्रिया यस्य स स्तव्यः स्तवप्रिय इतीतरे ॥ ६८० ॥

स्तूयते येन तत् स्तोत्रं गुणसङ्कीर्तनात्मकम् ।
"योऽन्तःप्रविश्य"वचनात्स्तुतिहेतुरितीतरे ॥ ६८१ ॥

1 'सर्पाणामस्मि वासुकि'रिति भगवद्वचनम् ।

2 'यज्ञानां जपयज्ञोऽस्मी'ति भगवद्वचनम् ।

3 'प्रळये सर्वं जगत्तदात्मकतया परमात्माग्नौ हूयत इति महाहविः । यद्वा,महत् प्रकृष्टफलमीश्वरार्पणबुद्ध्या भक्तैरर्पितं हविर्यस्येति महाहविः' इति लघुविवरणे । स्तोत्रमिति । तदपि हरेस्स्वरूपमिति भाष्ये ।

पूर्णः पूरयिता पुण्यः पुण्यकीर्तिरनामयः ॥ ७३ ॥
मनोजवस्तीर्थकरो वसुरेता वसुप्रदः ।

वि— स्तुतः स्तवनरूपायाः क्रियाया विषयत्वतः ।
स्तुताः स्तोतार एतस्य स्तुतस्तोतेति केचन ॥ ६८२ ॥

सर्वभूतात्मकत्वेन स्तोताप्य,न्ये तु चक्षते ।
भक्तान् स्तौत्यत्र वचनं "मम प्राणा हि पाण्डवाः" ॥ ६८३ ॥

रणमस्य प्रियं यस्माद्धत्ते पञ्चायुधानि च ।
लोकानां रक्षणार्थाय तस्मादेव रणप्रियः ॥ ६८४ ॥

पूर्णः सकलकामैश्च सम्पन्नस्सर्वशक्तिभिः ।
अङ्गादिसर्वशास्त्रान्तविद्यासम्पत्तितोऽथवा ॥ ६८५ ॥

सर्वेषामपि सम्पद्भिस्सदा पूरयिताप्यसौ ।
"कामानवाप्नुयात्कामी प्रजार्थी"त्यादिदर्शनात् ॥ ६८६ ॥

पुण्यः स्मरणमात्रेण कल्मषं क्षपयत्यतः ।
"स्मरणादेव तद्विष्णोस्सम्पूर्णस्स्या"दिति श्रुतिः ॥ ६८७ ॥

पुण्यकीर्तिर्नृणां पुण्यं कीर्तिरस्यावहत्यतः ।
"नाशौचं कीर्तने तस्य पवित्रं भगवान् हरिः" ॥ ६८८ ॥

अनामयः कर्मजन्यैर्व्याधिभिर्नैव पीड्यते ।
भक्तानान्नाशुभं यस्मात्सोऽनामय इतीतरे ॥ ६८९ ॥

व्यापित्वान्मनसो वेग इवास्येति मनोजवः ।
उपासनाफलं तस्य मनोवज्जवनात्परे ॥ ६९० ॥

विद्याश्चतुर्दश तथा बाह्यानां समयाश्च ये ।
तेषां प्रणेता वक्ता च ततः तीर्थकरो हरिः ॥ ६९१ ॥

1 स्तुतिरिति मुद्रितभाष्यपुस्तकपाठः ।
2 भक्तानीति मातृकायां दृश्यते ।

वसुप्रदो वासुदेवो वसुर्वसुमना हविः ॥ ७४ ॥
सद्गतिः सत्कृतिः

वि— अयं पूर्वमपस्सृष्ट्वा तासु वीर्यमवासृजत् ।
तदण्डमभवद्धैमं वसुरेताः ततस्स्मृतः ॥ ६९२ ॥

प्रकर्षेण ददात्येष वसं तस्माद्वसुप्रदः ।
अन्ये निधिवदात्मानं देवक्यै दत्तवानिति ॥ ६९३ ॥

वसु प्रकृष्टं मोक्षाख्यं प्रददाति वसुप्रदः ।
वसूनि त्रिदशारीणां खण्डयन्वा वसुप्रदः ॥ ६९४ ॥

अपत्यं वासुदेवस्य वासुदेव इति स्मृतः ।
"वसुदेवसुतं देव"मित्यादिवचनादयम् ॥ ६९५ ॥

वसुः[1] वसति भूतेषु भूतान्यस्मिन्वसन्त्यपि ।
क्षीरोदे वसतीत्येष वसुरित्यपरेऽब्रुवन् ॥ ६९६ ॥

अविशेषेण[2] सर्वेषु विषयेषु च तन्मनः ।
वसतीति वसु प्रोक्तं ततो वसुमना हरिः ॥ ६९७ ॥

"ब्रह्मार्पणं ब्रह्म हवि"रिति स्मृत्या हविः स्मृतः ।
हूयते[3] नन्दगोपेन शिशुत्वेनेति चेतरे ॥ ६९८ ॥

सत्युत्कृष्टा गतिर्बुद्धिर्विद्यतेऽस्येति सद्गतिः ।
ब्रह्मास्मीति विदुर्ये ते सन्तस्तैर्गम्यतेऽथवा ॥ ६९९ ॥

सती कृतिर्जगद्रक्षालक्षणास्येति सत्कृतिः ।
स्मृतिमात्रेण पापघ्नस्वभावोऽयमितीतरे ॥ ७०० ॥

इति श्रीविष्णुसहस्रनामकारिकायाम्
सप्तमं शतकम्

---

1 वसेः कर्तर्यधिकरणे वा उः ।

2 अविशेषेण सर्वेषु विषयेषु वसतीति वसु । वसु मनो यस्य स वसुमनाः । सर्वज्ञ इत्यर्थः ।

3 कृष्णेत्यादिनामभिराहूयत इत्यर्थः ।

# अष्टमं शतकम्

सत्ता सद्भूतिः सत्परायणम्[1] ।
शूरसेनो यदुश्रेष्ठः सन्निवासः सुयामुनः ॥ ७५ ॥

वि— सजातीयविजातीयस्वगतैरपि वर्जिता ।
भेदैः सत्तेत्यं "एकमेवाद्वितीय"मिति वाक्यतः ॥ ७०१ ॥

सन्नेव भूतिः सद्भूतिः परमात्मा चिदात्मकः ।
भूतिः प्रातिस्विकी यस्य स सद्भूतिरितीतरे ॥ ७०२ ॥

सतां तत्त्वविदां श्रेष्ठमयनं सत्परायणम्[2] ।
"ब्रह्मवित्परमाप्नोति" "ब्रह्मैव भवती"त्यतः ॥ ७०३ ॥

हनुमत्प्रमुखा यस्यां सैनिकाः शौर्यशालिनः ।
सा सेनास्येऽस्ति भगवान् शूरसेन इति स्मृतः ॥ ७०४ ॥

यदूनां प्रधानत्वाद् यदुश्रेष्ठोऽयमुच्यते ।
"गोपालो यादवं वंशमुद्धरिष्यति"वाक्यतः ॥ ७०५ ॥

विदुषामाश्रयत्वेन सन्निवासः प्रकीर्तितः ।
"ये भजन्ति तु मां भक्त्या मयि ते तेष्वि"ति स्मृतेः ॥ ७०६ ॥

पद्मासनाद्या[3] यद्वा यमुनातीरवासिनः ।
गोपा यत्परिवेष्टारः शोभनाः[4] स सुयामुनः ॥ ७०७ ॥

1 सत्परायणः इत्यपि पाठः ।

2 परायण इति पुल्लिङ्गतया केशवीयपाठः । परायणस्यास्य लिङ्गनियमो नास्ति । 'परायणमभिप्रेतं तत्परं परमाश्रये ।' इति नानालिङ्गाध्याये यादवोक्तिः । सतः परायणा यस्येति बहुव्रीहिर्वा इति तत्त्वविवरणकाराः ।

3 पद्मासनाद्या गोवर्धनधरा इति भाष्ये ।

4 शोभन इत्येकवचनान्तं मातृकायाम् । शोभना इति तु भाष्यानुसारि । 'कालिन्दीतीरे शोभना यमुना अस्येति सुयामुनः । गोवर्धनधरः । यद्वा यामुनाः परिवेष्टारः । परिवेष्ट इति धातुः । परिवेषणं परिवेष्टनम् । शोभनाः यामुनाः परितः गोपाः, पद्मासनाद्याः अस्येति सुयामुन इति तत्त्वविवरणम् ।

भूतावासो वासुदेवः सर्वासुनिलयोऽनलः ।
दर्पहा दर्पदो दृप्तो दुर्धरोऽथापराजितः ॥ ७६ ॥

---

वि— वसन्ति भूतान्येतस्मिन् भूतावासः ततस्स्मृतः ।
"मयि सर्वमिदं प्रोत"मित्यादिभगवत्स्मृतेः ॥ ७०८ ॥

जगदाच्छादनाद्देवो मायया वासुरुच्यते ।
असौ वासुश्च देवश्च वासुदेव इति स्मृतः ॥ ७०९ ॥

सर्वेऽसवोऽन्ये मुख्याश्च प्राणा जीवात्मना[1] सह ।
विलीयन्तेऽप्यये यस्मिन् सर्वासुनिलयः परः ॥ ७१० ॥

नाम्नेऽस्य[2] सम्पदस्सर्वा नालमित्यनलो हरिः ।
कृतापराधान् भक्तेषु सोढुन्नालमितीतरे ॥ ७११ ॥

तिष्ठतां पथ्यशास्त्रीये दर्पं हन्तीति दर्पहा ।
हन्तीन्द्रादेर्दर्पमसौ शैलधृत्यादिनेतरे ॥ ७१२ ॥

ददाति दर्पं[3] शास्त्रीये तिष्ठतां पथि दर्पदः ।
अन्ये तु दर्पं भक्तानां न ददातीत्यदर्पदः ॥ ७१३ ॥

स्वात्मामृतरसास्वादाद् दृप्तो मुदित इत्यतः ।
अदृप्तोऽन्ये स्वयं कर्म बहु कृत्वाप्यविस्मयात्[4] ॥ ७१४ ॥

दुर्धरो धारणा[5]ऽशक्त्या साऽस्योपाधेरभावतः ।
तथापि तत्प्रसादेन कैश्चिद्दुःखेन धार्यते ॥ ७१५ ॥

नान्तरैश्शत्रुभिर्बाह्यैर्जित इत्यपराजितः ।
"यमाहुर्वेदविदुषो वराहमजितं"स्मृतेः ॥ ७१६ ॥

1 जीवात्मके इति भाष्ये ।

2 नाम्नाऽस्येति मातृकायाम् । तत्साधुना क्रियया । अलं पर्याप्तिः शक्तिसम्पदाऽस्य विद्यत इत्यनल इति भाष्यम् ।

3 दप हर्षमोहनयोरिति धातुः । पथि दर्पः मोदः ।

4 अविस्मयात् अगर्वात् ।

5 अथवा प्रणिधानादिषु ।

विश्वमूर्तिर्महामूर्तिर्दीप्तमूर्तिरमूर्तिमान् ।
अनेकमूर्तिरव्यक्तः शतमूर्तिः शताननः ॥ ७७ ॥
एको नैकः सवः कः किम् यत्तत्पदमनुत्तमम् ।

---

वि— विश्वमूर्तिः मूर्तिरस्य विश्वं सर्वात्मभावतः ।
अन्ये विश्वाश्रया मूर्ति"रहमात्मा"स्मृतेरिति ॥ ७१७ ॥

अनिरुद्धो महामूर्तिः शेषपर्यङ्कशाय्यसौ ।
अन्य आहु"रिहैकस्थं जगत् कृत्स्न"मिति श्रुतेः ॥ ७१८ ॥

[1]दीप्तमूर्तिः ज्ञानमयी मूर्तिः, स्वेच्छापरिग्रहात् ।
अन्ये सूर्यस्सहस्राक्ष इत्यस्यार्थं प्रचक्षते ॥ ७१९ ॥

अमूर्तिमानस्य नास्ति मूर्तिः कर्मनिबन्धना ।
सन्त्यस्यामूर्तयोऽव्यक्तपुरुषाद्या इतीतरे ॥ ७२० ॥

स्वेच्छावतारेषु गतो लोकानामुपकारिणीः ।
बह्वीर्मूर्तीरिति प्रोक्तोऽनेकमूर्तिरिति प्रभुः ॥ ७२१ ॥

[2]अथापि वासुदेवो "न सन्दृशे तिष्ठति" श्रुतेः ।
अव्यक्तो "व्यक्तिमापन्न" इति वाक्यात्परे विदुः ॥ ७२२ ॥

शतमूर्तिः मूर्तयोऽस्य शतन्नानाविकल्पजाः ।
ब्रह्मादीनाम्मूर्तयोऽस्माच्छतमित्यपरेऽब्रुवन् ॥ ७२३ ॥

हेतोश्च शतमूर्तित्वादेव ज्ञेयः शताननः ।
"अनेकवक्त्रनयन"मिति स्मृत्याऽपरेऽब्रुवन् ॥ ७२४ ॥

परमार्थत एकोसौ सजातीयाद्यभावतः ।
समाभ्यधिकराहित्यादेक इत्यपरेऽब्रुवन् ॥ ७२५ ॥

---

1 दीप्ता ज्ञानमयी मूर्तिरस्येति, स्वेच्छया गृहीता तैजसी मूर्तिर्दीप्ताऽस्येति वा दीप्तमूर्तिरिति भाष्यम् ।

2 अथापीत्यस्य स्थाने अस्यापीति मातृकापाठः । तस्य सङ्गतार्थत्वं चिन्त्यम् । 'यद्यप्यनेकमूर्तित्वमस्य, तथाप्ययमीदृश एवेति न व्यज्यते इत्यव्यक्तः' इति भाष्यानुसारेण अथापीति लिखितम् ।

लोकबन्धुर्लोकनाथो माधवो भक्तवत्सलः ॥ ७८ ॥

---

वि— नैकोऽसौ मायया देव "इन्द्रो मायाभि"रित्यतः।
अन्ये तु मन्वते "नान्तोऽस्ती"ति स्मृत्या विभूतिभिः ॥ ७२६ ॥

सोमस्याभिषवाद्यज्ञः सवः, नामद्वयं परे।
स्यतीति[1] स तमो भाक्तं भूतेषु वसतीति वः ॥ ७२७ ॥

सुखवाचिकशब्देन[2] क इति स्तूयते हरिः।
"भारूपस्सत्यसङ्कल्पः"श्रुत्यान्ये कनतीति कः ॥ ७२८ ॥

पुरुषार्थस्वरूपत्वा"त्सोऽन्वेष्टव्य"इति श्रुतेः।
किं ब्रह्मेति विचार्यत्वात् किंशब्दो ब्रह्मवाचकः ॥ ७२९ ॥

[3]स्वतस्सिद्धोद्देश्यवस्तुवाचिना यत्पदेन च।
ब्रह्म निर्दिश्यत इति ब्रह्म यत् परिकीर्तितम् ॥ ७३० ॥

"ओन्तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः"।
इति स्मृत्या तनोतीति व्युत्पत्त्या ब्रह्म तत् परम् ॥ ७३१ ॥

मुमुक्षुभिः प्राप्यते च प्रकृष्टत्वात्स्यतः परम्।
सविशेषणनामैकमेतत् पदमनुत्तमम् ॥ ७३२ ॥

लोकबन्धुः बध्यतेऽस्मिन्[4]नाधारे लोक इत्यतः।
हितोपदेशा[5]ल्लोकानामथवा जनकत्वतः ॥ ७३३ ॥

लोकानां हितमाशास्त ईष्टे वोपतपत्यसौ।
लोकनाथो याचते[6] वा लोकांस्तैर्वा स याच्यते ॥ ७३४ ॥

---

1 स्यतमोभाक्तमिति मातृकापाठः। तदर्थो न ज्ञायते। स्य इत्यस्य स्थाने स इति पाठकल्पने, भाक्तं भक्तसम्बन्धि तमोऽज्ञानं स्यति क्षिपतीति स इत्यर्थसङ्गतिः।

2 सुखवाचिकशब्दस्य क्लीबत्वेपि तेन स्तूयत इत्यनेन स्तुत्यतारूपसम्बन्धप्रदर्शनेन तस्येदमित्यणि निष्पन्नस्य क इत्यस्य पुंस्त्वोपपत्तिरुद्बोधिता।

3 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः।

4 अध्यस्यत इत्यर्थः। तथाच लोकाध्यासाधिष्ठानमिति तात्पर्यम्।

5 श्रुतिस्मृतिभ्यामित्यर्थात्। 6 वामनरूपेण महाबलिमित्यर्थः।

**सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी ।**
**वीरहा विषमः शून्यो घृताशीरचलश्चलः ॥ ७९ ॥**

वि— मधोः कुलेऽवतीर्णत्वात् **माधवो**ऽस्य जपे स्मृतिः ।
"आनन्दो माधवश्चैव सर्वकामाप्तये नृपः" ॥ ७३५ ॥

भक्तानां स्नेहवत्त्वेन प्रोक्तोऽसौ **भक्तवत्सलः** ।
भक्तदोषान्निहन्त्यन्ये तद्वशस्तिष्ठतीति वा ॥ ७३६ ॥

**सुवर्णवर्णः** स्वर्णस्य यथा वर्णस्तथास्य च ।
वर्णोऽस्ति "पश्यते रुक्मवर्णं कर्तार"मित्यपि ॥ ७३७ ॥

अङ्गं हेममयं यस्य स **हेमाङ्गः** प्रकीर्तितः ।
हरिः "एषोऽन्तरादित्ये हिरण्मय"इति श्रुतेः ॥ ७३८ ॥

**वराङ्गः** शोभनान्यस्य सन्त्यङ्गानीति कीर्तितः ।
"फुल्लेन्दीवरपत्राभ"मित्यादिषु च दर्शनात् ॥ ७३९ ॥

केयूरैर्ह्लादनैः[1] कृष्णो भूषितः **चन्दनाङ्गदी** ।
चन्दनस्यानुलेपैश्च युक्त इत्यपरेऽब्रुवन् ॥ ७४० ॥

वीरांश्च दूषणखरप्रमुखान् हन्ति **वीरहा** ।
"निजघान रणे रामस्तेषा"मित्यादिवाक्यतः ॥ ७४१ ॥

समो नास्येति **विषमो** "न त्वत्सम"इति श्रुतेः ।
असत्स्वरक्षणात्सत्सु रक्षणादपरेऽब्रुवन् ॥ ७४२ ॥

सर्वैर्विशेषै राहित्याच्छून्यवत् **शून्य** उच्यते ।
"निरवद्या"दिवाक्येन निर्दोषोऽसावितीतरे ॥ ७४३ ॥

**घृताशीः** प्रार्थना अस्य घृता[2] विगलिता इति ।
"स्तेयं स्वाद्वृती"ति वाक्याद्घृतेऽस्याशीरितीतरे ॥ ७४४ ॥

स्वरूपतो वा सामर्थ्याद्यद्वा ज्ञानादिकाद्गुणात् ।
विद्यते नास्य चलनं तस्माद् **अचल** उच्यते ॥ ७४५ ॥

1 चदि आह्लादने । कर्तरि ल्युटि चन्दनः । 2 घृ क्षरणदीप्त्योः । कर्तरि क्तः ।

अमानी मानदो मान्यो लोकस्वामी त्रिलोकधृक् ।
सुमेधा मेधजो धन्यः सत्यमेधा धराधरः ॥ ८० ॥

वि— चलश्च वायुरूपेण, भक्तार्थाय परेऽब्रुवन् ।
रक्षणाय गजेन्द्रस्य स्थानाच्चलनदर्शनात् ॥ ७४६ ॥

आत्माभिमानरहितोऽनात्मवस्तुष्वमान्यत[1]ः ।
अहङ्कारेण रहितो भक्तेष्वित्यपरेऽब्रुवन् ॥ ७४७ ॥

सतां सत्कारमसतां मानं देहात्मतामतिम् ।
[2]मानदोऽसौ ददातीति वैपरीत्यन्तु खण्डने ॥ ७४८ ॥

सर्वलोकेश्वरत्वेन पूजनीयः प्रयत्नतः ।
इति मान्यो हरिः "सर्वे नमस्यन्ती"ति वाक्यतः ॥ ७४९ ॥

लोकस्वामीऽश्वरत्वेन, परे स्वामी नियामकः ।
[3]लोक्यतेऽनेन शास्त्रञ्च लोको यस्येति चक्षते ॥ ७५० ॥

त्रिलोकधृक् धारयति त्रीन् लोकानिति कीर्तितः ।
"यो लोकत्रयमाविश्य बिभर्तीतीश्वर[4]स्मृतेः ॥ ७५१ ॥

यस्य स्वाभाविकी प्रज्ञा स सुमेधाः, परेऽब्रुवन् ।
अहं वो बान्धवो जात इति [5]गोपालवाक्यतः ॥ ७५२ ॥

मेधजो जायते मेधे यज्ञे यस्मादसौ हरिः ।
पुत्रीयव्रतयज्ञान्ते देवक्या इति चेतरे ॥ ७५३ ॥

[6]कृतार्थत्वेन धन्योऽयं. कुबेराद्या धनाधिपाः ।
धन्यास्तद्भक्तया देवो धन्य इत्यपरेऽब्रुवन् ॥ ७५४ ॥

1 अमानी अत इति छेदः । वस्तुषु मान्यतः इति मातृकापाठः असङ्गत इत्यतिस्फुटम् ।

2 ददाति मानमिति वा इति मातृकायां तृतीयपादः । तत्र मानमित्यस्य पौनरुक्त्यादनन्वयः । मानद इति नाम्नोऽग्रहणञ्च । खण्डन इत्यस्य, मानं द्यति खण्डयतीति धातोः खण्डनार्थत्वपक्ष इत्यर्थः ।

3 लोक्यतेनेति शास्त्रञ्च इति मातृकायाम् ।

4 ईश्वरः स्मृतेः इति मातृकापाठः ।

5 गोपादिवचनात् इति मातृकायाम् ।

6 द्वितीयपक्षे धन्यशब्दात्सम्बन्धिनि अर्शआद्यच् । सम्बन्धश्च स्वामित्वम् ।

तेजोवृषो द्युतिधरः सर्वशस्त्रभृतां वरः ।
प्रग्रहो निग्रहो व्यग्रो नैकशृङ्गो गदाग्रजः ॥ ८१ ॥

---

वि— सत्या ब्रह्मण्यदेवत्वानुकूलाऽवितथा सदा ।
मेधा यस्यास्ति स हरिः सत्यमेधा इति स्मृतः ॥ ७५५ ॥

धराधरोंऽशैस्त्वशेषैरशेषां धरणीं धरन् ।
गोवर्धनस्य शैलस्य धरणादपरेऽब्रुवन् ॥ ७५६ ॥

तेजोवृषो वर्षतीति जलान्यादित्यरूपतः ।
तेजो ववर्ष पार्थस्य प्रत्ययार्थमितीतरे ॥ ७५७ ॥

द्युतिमङ्गगतां कान्तिं वहन् द्युतिधरो हरिः ।
अन्ये द्युतिं सर्वदेवावस्थानार्हां प्रचक्षते ॥ ७५८ ॥

सर्वशस्त्रभृतां श्रेष्ठः सर्वशस्त्रभृतां वरः ।
शस्त्राण्यनेकरूपाणि यदरातिषु मुञ्चति ॥ ७५९ ॥

प्रग्रहः प्रतिगृह्णाति भक्तैर्दत्तं फलादिकम् ।
वल्गादेन बध्नाति रश्मिनेवेन्द्रियाणि च ॥ ७६० ॥

इन्द्रियाणि स्ववश्यत्वान्निगृह्णातीति निग्रहः ।
अन्ये वश्यतया पार्थं युद्धायेति प्रचक्षते ॥ ७६१ ॥

व्यग्रोऽयमन्तो नाशोऽस्य विगतो नास्त्यतोऽथवा ।
[2]भक्ताभीष्टप्रदानेषु. तद्युद्धेष्विति चेऽतरे ॥ ७६२ ॥

"चत्वारि शृङ्गा" मन्त्रेण नैकशृङ्गो महात्मकः ।
शृङ्गप्रधानं कर्मास्य नैकमित्यपरेऽब्रुवन् ॥ ७६३ ॥

मन्त्रेण निगदेनाग्रे जायतेऽतो गदाग्रजः ।
अन्ये तु निगदस्याग्रे[3] जातं कृष्णं प्रचक्षते ॥ ७६४ ॥

---

1 तेजश्शब्दस्य जलवाचित्वं भाष्ये स्पष्टम् ।

2 अनयोः पक्षयोः व्यग्र इत्यस्य व्यासक्त इत्यर्थः ।

3 अग्रे जायते प्रत्यक्षो भवतीत्यर्थः । निशब्दलोपं कृत्वा गदाग्रज इति भाष्यम् । गदो नाम श्रीवासुदेवावरजः । तस्मादग्रे जायत इत्यप्यर्थस्तत्र दर्शितः ।

चतुर्मूर्तिश्चतुर्बाहुश्चतुर्व्यूहश्चतुर्गतिः ।
चतुरात्मा चतुर्भावश्चतुर्वेदविदेकपात् ॥ ८२ ॥
समावर्तोऽनिवृत्तात्मा दुर्जयो दुरतिक्रमः ।

---

वि— विराट्सूत्राव्याकृतान्तर्यामिनोऽस्य मूर्तयः ।
चतस्रस्तदतः प्रोक्त[1]श्चतुर्मूर्तिरिति प्रभुः ॥ ७६५ ॥

"चतुर्भुजश्शङ्खगदाद्यै"रित्यादिषु च दर्शनात् ।
चत्वारो बाहवोऽस्येति चतुर्बाहुः प्रकीर्तितः ॥ ७६६ ॥

चतुर्व्यूहोऽस्य चत्वारो व्यूहाः [2]पुरुषसंज्ञिताः ।
छन्दश्शरीरं वेदाश्च महापुरुष इत्यपि ॥ ७६७ ॥

आश्रमाणाञ्च वर्णानाञ्चतुर्णामुक्तकारिणाम् ।
गतिर्भवत्ययं यस्मात्तस्मात् प्रोक्तश्चतुर्गतिः । ॥ ७६८ ॥

चतुरात्मास्य चतुरं रागद्वेषविवर्जितम् ।
मनोऽथवास्य चत्वार आत्मानो [3]मनआदयः ॥ ७६९ ॥

धर्मार्थकाममोक्षाख्यपुरुषार्थचतुष्टयम् ।
भवत्युत्पद्यते यस्मात्स चतुर्भाव उच्यते ॥ ७७० ॥

चतुर्वेदविदित्युक्तश्चतुर्वेदार्थवेदनात् ।
"वेदान्तकृद्वेदविदेव"त्यादिस्मृतिदर्शनात् ॥ ७७१ ॥

एकपात् विश्वभूतानि पादोऽस्यैकः, परेऽब्रुवन् ।
निस्समाभ्यधिकत्वेन पद्यते ज्ञायते हरिः ॥ ७७२ ॥

संसारावर्तनात्सम्यक् समावर्त इति स्मृतः ।
समीचीनावतरणात्समावर्तं इतीतरे ॥ ७७३ ॥

---

1 सिता, रक्ता, पीता, कृष्णा चेति चतस्रो मूर्तयोऽस्येति वा इत्यपि भाष्ये युगभेदेन वर्णभेदः ।

2 शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति बह्वृचोपनिषत् ।

3 मनआदयः मनो बुद्धिरहङ्कारश्चित्तञ्च ।

दुर्लभो दुर्गमो दुर्गो दुरावासो दुरारिहा ॥ ८३ ॥
शुभाङ्गो लोकसारङ्गः सुतन्तुस्तन्तुवर्धनः ।

---

वि— सर्वत्र वर्तमानत्वाद् **अनिवृत्तात्मनामवान्** ।
**निवृत्तात्मा** मनो यस्य निवृत्तं विषयादितः ॥ ७७४ ॥

जेतुन्न शक्यत इति **दुर्जयो**ऽत्राब्रवीन्मुनिः ।
यन्न दर्शितवानेष न तदन्वेष्टुमर्हति ॥ ७७५ ॥

भयहेतुतयास्याज्ञा न लङ्घ्या **दुरतिक्रमः** ।
पादमूलमतिक्रम्य नास्ति गत्यन्तरं परे ॥ ७७६ ॥

**दुर्लभो** लभ्यत इति भक्त्या दुर्लभया हरिः ।
चित्तैकाग्र्यस्य राहित्ये सुदुर्लभ इतीतरे ॥ ७७७ ॥

दुःखेन ज्ञायत इति **दुर्गमः** परिकीर्तितः ।
चित्तैकाग्र्ये सति पुनरदुर्गम इतीतरे ॥ ७७८ ॥

**दुर्गो** विघ्नैः प्रतिहतैर्जनैर्दुःखादवाप्यते ।
दुर्गवच्छत्रुभङ्गाय श्रयणीय इतीतरे ॥ ७७९ ॥

दुःखेनावास्यते चित्ते योगिभिस्ससमाधिभिः ।
तस्माद् **दुरावास** इति प्रोक्तो विष्णुर्विचक्षणैः ॥ ७८० ॥

दुर्गामिनो[1] दानवा ये तान् हन्तीति **दुरारिहा** ।
अन्ये दुर्मार्गतः प्राप्तं पापं हन्तीति चक्षते ॥ ७८१ ॥

**शुभाङ्गः** शोभनैरङ्गैर्ध्येयत्वा,दपरेऽब्रुवन् ।
गोपिकानयनानन्दसन्दोहस्यन्दिसुन्दरः[2] ॥ ७८२ ॥

---

1 दुरुपसृष्टाद्‌गताविति धातोर्णिनिप्रत्यये निष्पन्नस्य दुरारिपदस्य विवरणं दुर्गामिन इति ।

2 सुन्दरमिति मातृकायाम् ।

इन्द्रकर्मा महाकर्मा कृतकर्मा कृतागमः ॥ ८४ ॥

त्रि— लोकानां [1]लोकसारङ्गः सारं गृह्णात्यतोऽथवा ।
लोकनां प्रणवस्सारस्तेन प्राप्तव्य इत्यतः ॥ ७८३ ॥

सुतन्तुः शोभनस्तन्तुर्विस्तीर्णोऽस्य प्रपञ्चकः ।
शोभनो वसुदेवादेः प्रजातन्तुरितीतरे ॥ ७८४ ॥

तन्तो[2]रुच्छेदनाद्वा वर्धनात् तन्तुवर्धनः ।
प्रद्युम्नादेरसौ तन्तोर्वर्धनादिति चेतरे ॥ ७८५ ॥

[3]इन्द्रस्येवेन्द्रकर्मास्य कर्मैश्वर्यमतः परम् ।
बौद्धावतारादिरूपं कर्मेन्द्रार्थमितीतरे ॥ ७८६ ॥

महाकर्माऽन्तरिक्षादि महत् कर्मास्य दृश्यते ।
महद्वेदत्याजनादि [4]कर्मास्येतीतरेऽब्रुवन् ॥ ७८७ ॥

कृतकर्मा न कर्तव्यं कृतमेवास्य कर्म यत् ।
([5]प्रशिष्याकारतोऽत्रान्ये दैत्याभिव्यक्तिमूचिरे ?) ॥ ७८८ ॥

वेदात्मकागमो येन कृत एष कृतागमः ।
बौद्धागमः कृतो येन स इत्यन्ये प्रचक्षते ॥ ७८९ ॥

---

1 सारङ्गः षट्पदः । यथा सारङ्गः पुष्पाणां सारभूतं मधु गृह्णाति, तथा अयमपि लोकानां जनानां शुभं गृह्णातीति सारङ्गसादृश्याल्लोकसारङ्गः । यद्वा लोक्यते अस्मिन् सर्वमिति लोको वेदः । तत्सारो लोकसारः प्रणवः । तेन गम्यते ज्ञायत इति लोकसारङ्ग इति लघुविवरणे ।

2 प्रथमपक्षे वृध्यर्थकवृधुधातोर्हेतुमण्यंन्तात्, द्वितीयपक्षे छेदनार्थकवर्धधातोर्ण्यन्तात्सन्ध्याविल्युरिति लघुविवरणे स्पष्टम् ।

3 'अस्य कर्मेन्द्रस्येव' इति वृत्तहीनः नामहीनश्च पाठो मातृकायां दृश्यते । 'बौद्धावताररूपाणि' इति च ।

4 कर्म कार्यम् । त्याजनादीति । दैत्यैरिति शेषः ।

5 प्रकृष्टाश्शिष्या यस्य स प्रशिष्यः । तदाकारतः तादृशशिष्यसहितगुरुरूपेणेत्यर्थः । दैत्याभिव्यक्तिं दैत्यानाम् अभिव्यक्तिमात्मामिव्यञ्जनम् । प्रशिष्याकारमात्रान्ये इति मातृकायां दृश्यते ।

उद्भवः सुन्दरः सुन्दो रत्ननाभः सुलोचनः ।
अर्को वाजसनः शृङ्गी जयन्तः सर्वविजयी ॥ ८५ ॥

वि— उद्भवोऽसौ [1]येन जन्म स्वेच्छया भजते हरिः ।
समस्तकारणत्वेनाऽपगतं जन्म वा हरेः ॥ ७९.० ॥

सौभाग्यस्य समस्तस्य स्वरूपं सुन्दरो हरिः ।
रूपमस्यातिशायीति मन्मथादपरेऽब्रुवन् ॥ ७९.१ ॥

सुन्दशब्दस्त्वार्द्रभाववाच्यतः करुणाकरः ।
सुशोभनानि कर्माणि द्यति खण्डयतीतरे ॥ ७९.२ ॥

[2]शोभना नाभिरस्येति रत्ननाभः प्रकीर्तितः ।
रत्नवत्प्रेक्षणीयास्य नाभिरित्यपरेऽब्रुवन् ॥ ७९.३ ॥

शोभनं [3]लोचनं नेत्रं ज्ञानं वास्य सुलोचनः ।
केचिदाहुश्शोभनत्वं सामर्थ्यं दैत्यवञ्चने ॥ ७९.४ ॥

[4]अर्कोऽर्चनीयो ब्रह्माद्यैस्सुरैः पूज्यतमैरपि ।
"यदर्चितं ब्रह्मभवादिभि"रित्यादिवाक्यतः ॥ ७९.५ ॥

अन्नार्थिनां वाजमन्नं यत्सनोति ददाति सः ।
तस्माद् वाजसनः प्रोक्तो भगवान् कविभिः पुरा ॥ ७९.६ ॥

शृङ्ग्यसौ प्रळयाम्भोधौ शृङ्गवान्मत्स्यरूपधृक् ।
"नैकशृङ्गो वराहस्त्व"मित्यादिवचनात्परे ॥ ७९.७ ॥

जयन्तो जयहेतुर्वा जयत्यतिशयेन वा ।
"अङ्गुल्यग्रेण तान् हन्यामिच्छन्नि"त्यादिवाक्यतः ॥ ७९.८ ॥

---

1 आद्ये पक्षे उदित्यस्य उत्कृष्टमित्यर्थः उत्कर्षश्च स्वेच्छाधीनत्वादिः द्वितीये उद्गतम् अपगतमित्यर्थः ।

2 रत्नशब्देन शोभा लक्ष्यते इति भाष्यम् । 3 लोचृ दर्शने इति धातोः करणभावयोर्ल्युटि अर्थद्वयलाभः ।

4 अर्चेः कर्मणि घञ् । चजोः कु घिण्ण्यतोः इति कुत्वम् इति, यद्वा अर्च्यते स्तूयत इत्यर्कः । अर्क स्तवन इति चौरादिकात् कर्मण्येरच् इति च लघुनिघण्टौ ।

सुवर्णबिन्दुः

---

वि— सर्वविज्जयस्य सर्वविषयं ज्ञानमस्ति च ।
शत्रून्बाह्यान्तराञ्जेतुं दुर्जयाच्छक्तिरस्ति च ॥ ७९९ ॥

सुवर्णबिन्दुः स्वर्णाभा बिन्दवोऽङ्गानि यस्य सः ।
मन्त्रात्मा वा शोभनोऽस्मिन्नक्षरं बिन्दुसंयुतः ॥ ८०० ॥

इति श्रीविष्णुसहस्रनामविवरणकारिकायाम् अष्टमं शतकम्

---



---

1 सर्वविन् जयी भवस्य इति छेदः ।

# नवमं शतकम्

अक्षोभ्यः सर्ववागीश्वरेश्वरः ।
महाह्रदो महागर्तो महाभूतो महानिधिः ॥ ८६ ॥
कुमुदः कुन्दरः कुन्दः पर्जन्यः पावनोऽनिलः ।

---

वि— शब्दादिविषयै रागद्वेषाद्यैस्त्रिदशारिभिः ।
न क्षुभ्यतेऽसावक्षोभ्यः शस्त्राभासैरितीतरे ॥ ८०१ ॥

वागीश्वराणां सर्वेषां ब्रह्मादीनामपीश्वरः ।
तस्मान्नारायणो देवः सर्ववागीश्वरेश्वरः ॥ ८०२ ॥

अवगाह्य तदानन्दं विश्रम्य सुखमासते[1] ।
अन्यैर्दुरवगाहत्वात् महाह्रद इतीतरे ॥ ८०३ ॥

दुरन्ता यस्य महती माया गर्तवदित्यतः ।
महागर्त इति प्रोक्तो यद्वा देवो महारथः[2] ॥ ८०४ ॥

महाभूतोऽनवच्छिन्नस्वरूपो देशकालतः ।
महान्तः पुरुषा अस्य स्वभूता इति चेतरे ॥ ८०५ ॥

भूतान्यस्मिन्निधीयन्ते सर्वाणीति निधिः प्रभुः ।
महांश्चासौ निधिश्चेति महानिधिरितिस्मृतः ॥ ८०६ ॥

भारावतरणं कृत्वा कुं महीं मोदयत्यतः ।
"प्रहृष्टमुदिता लोका" वचनात् कुमुदो हरिः ॥ ८०७ ॥

कुन्दरः कुन्दवच्छुद्धं फलं गतिं ददाति वा ।
[3]दारयादते, वराहो वा दारयामास कुं महीम् ॥ ८०८ ॥

---

1 योगिन इति शेषः । 2 गर्तशब्दो रथपर्यायो नैरुक्तक इति भाष्ये ।
3 रत्योर्वृन्त्येकत्वस्मरणादिति भाष्ये ।

अमृताशोऽमृतवपुः सर्वज्ञः सर्वतोमुखः ।
सुलभः सुव्रतः सिद्धः शत्रुजिच्छत्रुतापनः ॥ ८७ ॥

वि— कुन्दतुल्यप्रतीकत्वात्, प्रददातीति[1] वा महीम् ।
कुन्दः क्ष्मां खण्डयति वा, कौ स्थितान्वा नृपानिति ॥ ८०९ ॥

आध्यात्मिकादिकांस्तापान् शमयन्मेघवत्सदा ।
कामान् वर्षति भक्तेभ्यः इति पर्जन्य उच्यते ॥ ८१० ॥

पवनः स्मृतिमात्रेण पुनाति, कथयेतरे ।
वक्तारं पृच्छकं श्रोतॄन् तत्पादसलिलं यथा ॥ ८११ ॥

इलति स्वपितीतीलै[3] इलो नेत्यनिलोऽथवा ।
न प्रेरकोऽस्येत्यनिलः [4]ज्ञेयस्सोऽगहनोऽथवा ॥ ८१२ ॥

अमृताशः स्वरूपस्यानन्दस्यानुभवात्स्मृतः ।
अनश्वरफलेच्छत्वाद्वाऽमृत[5]प्राशनात्तु वा ॥ ८१३ ॥

वपुस्स्वरूपममृतं[6] यस्यामृतवपुस्त्वसौ ।
अप्राकृतं वपुर्यस्य स इत्यन्ये प्रचक्षते ॥ ८१४ ॥

सर्वं जानाति सर्वज्ञः "यस्सर्वज्ञ" इति श्रुतेः ।
सर्वं जानाति भक्तेभ्यो देयत्वेनेति चेतरे ॥ ८१५ ॥

मुखानि सर्वतोऽस्येति सर्वतोमुख उच्यते ।
वचना"द्विश्वतश्चक्षुस्सर्वतोक्षिशिरोमुखम्" ॥ ८१६ ॥

पत्रैः पुष्पैः फलैस्तोयैर्भक्तिमात्रसमर्पितैः ।
सुखेन लभ्यत इति सुलभः परिकीर्तितः ॥ ८१७ ॥

---

1 भृगुनन्दनरूपी वाजिमेधान्ते कश्यपाय दक्षिणारूपेणेति भाष्ये स्पष्टम् ।
2 कुशब्देन पृथ्वीश्वरा लक्ष्यन्त इति भाष्यम् । खण्डयतीति अत्रापि योज्यम् ।
3 अज्ञ इत्यर्थः । नित्यप्रबुद्धस्वरूपत्वात्तद्विपरीत अनिलः ।
4 ज्ञेय स्स गृहणोऽथवा इति मातृकायान्दृश्यते । भाष्यानुसारेणात्र लिखितम् । अगहनः भक्तेभ्यस्सुलभ इति च भाष्यम् ।
5 अमृतमथनसमय इति भाष्ये स्पष्टम् ।
6 मृतं मरणं तद्रहितं वपुरस्येति भाष्यम् ।

**अधृतः स्वधृतः स्वास्यः प्राग्वंशो वंशवर्धनः** ॥ ९० ॥

वि — वाक्या“दस्थूल”मित्यादेः द्रव्यत्वप्रतिषेधतः ।
लघिम्नाचैव सर्वत्र त्वव्याहतगतिः **कृशः** ॥ ८३७ ॥

सर्वात्मकत्वेनैवेष स्थूल इत्युपचर्यते ।
[2]परिमार्ष्टुं विधिं गोपवत्सोऽभूत्स्थूलतो हरिः ॥ ८३८ ॥

सत्त्वस्य रक्षणे सृष्टौ रजसस्तमसो लये ।
अधिष्ठातृतया विष्णुः **गुणभृत्** परिकीर्तितः ॥ ८३९ ॥

गुणाभावान्निर्गुणोऽसौ परमार्थतया हरिः ।
“साक्षी चेता केवलो निर्गुणश्च” श्रुतिवाक्यतः ॥ ८४० ॥

शब्दादिरहितस्सूक्ष्मो नित्यश्शुद्धश्च सर्वगः ।
तस्माद्वक्तुं [3]तर्कितोऽपि न शक्योऽसावतो **महान्** ॥ ८४१ ॥

पृथ्व्यादीनां धारकाणामपि धारक ईश्वरः ।
न केनापि धृतस्तस्माद् **अधृतः** परिकीर्तितः ॥ ८४२ ॥

स्वेनात्मना धार्यतेऽसाविति **स्वधृत** उच्यते ।
“कस्मिन् प्रतिष्ठित” इति “स्वे महिम्नीति” च श्रुतेः ॥ ८४३ ॥

**स्वास्यः** पद्मोदरदलताम्रमस्याननं यतः ।
यद्वास्य मुखतस्सर्वे यतो वेदा विनिर्गताः ॥ ८४४ ॥

[4]अन्यस्य वंशिनो वंशः पाश्चात्यो नु तथास्य न ।
वंशः प्रपञ्चः प्रागेव तस्मात् **प्राग्वंश** उच्यते ॥ ८४५ ॥

प्रपञ्चं वर्धयन् यद्वा च्छेदयन् **वंशवर्धनः** ।
आत्मसन्तानानुरूपं वंशं वर्धयतीतरं ॥ ८४६ ॥

---

1 एव इत्यस्य स्थाने एतदिति मातृकायां दृश्यते ।

2 परिमार्ष्टुं पराजितं कर्तुम् । गोपवत्सः गोपरूपः वत्सरूपश्च ।

3 तर्कितोपि अनुमितोऽपि । अनुमापकहेत्वभाव एव स्फुटं कृतो विशेषणैः । शब्दादीत्यादिपदेन स्पर्शादिपरिग्रहः ।

4 प्राक् सूर्यादीनां वंशिनां वंशात् पूर्वस्मिन् काले वंशः स्वस्मादुद्भूतः प्रपञ्चोऽस्येति प्राग्वंशः इति लघुविवरणे ।

भारभृत्कथितो योगी योगीशः सर्वकामदः ।
आश्रमः श्रमणः क्षामः सुपर्णो वायुवाहनः ॥ ९२ ॥

वि— भारभृच्छेषरूपेण भुवो भारं वहत्यतः ।
मुक्तानां स्वामिरूपं भारमित्यपरेऽब्रुवन् ॥ ८४७ ॥

कथितोऽसौ परत्वेन वेदरामायणादिभिः ।
"तद्विष्णो"रित्युपक्रम्य "पुरुषान्ने"ति दर्शनात् ॥ ८४८ ॥

योगो ज्ञानमतो विष्णुः योगी तेनावगम्यते ।
योगस्समाधिस्स्वात्मानं स्वस्मिन् धत्ते ततोऽथवा ॥ ८४९ ॥

योगीनांह्यन्तरायेण विहन्यन्ते स्वरूपतः ।
समाधयन्ति, तथा नाथमतो योगीश उच्यते ॥ ८५० ॥

सर्वान् कामान्ददातीति सर्वकामद उच्यते ।
व्यासोऽब्रवीत् "फलमत उपपत्ते"रिति स्फुटम् ॥ ८५१ ॥

सर्वेषां[1] हि श्रमवतां संसारे भ्रमतां वने ।
विश्रमस्यास्पदत्वेन कीर्तितो हरिराश्रमः ॥ ८५२ ॥

अविवेकवतां सम्यक्तापनाच्छ्रमणः स्मृतः ।
श्राम्यतेऽभ्यस्यते योगहृष्टैः पुनरितीतरे ॥ ८५३ ॥

क्षीणाः प्रजाः करोतीति क्षामो व्यन्नात्स्वचाचचि ।
क्षमन्ते परमं दुर्गं ते[2]ऽस्मादिति चापरे ॥ ८५४ ॥

शोभनान्यस्य पर्णानि संसारतरुरूपिण ।
तस्मात्सुपर्णः "छन्दांसि यस्य पर्णानि"वाक्यतः ॥ ८५५ ॥

वायुर्वहति यद्भीत्या समस्तं वायुवाहनः ।
अन्ये वायुर्वायुसूनुर्हनूमान् यस्य वाहनम् ॥ ८५६ ॥

---

1 सर्वेषामाश्रमवताम् । इति मातृकायाम् । आश्रमवत् सर्वेषां संसारारण्ये भ्रमतां विश्रमस्थानत्वादाश्रम इति भाष्यम् । अतः सर्वेषामप्याश्रमवदिति पाठोऽत्यन्तं भाष्यानुसारी ।

2 तेऽध्यस्मादिति मातृकायाम् ।

धनुर्धरो धनुर्वेदो दण्डो दमयिता दमः। ॥ ९२ ॥
अपराजितः सर्वसहो नियन्ता नियमोऽयमः

वि— धनुर्धरो धनुश्श्रीमान् धारयामास राघवः। ॥ ८५७ ॥
अत्रोदाहरणं "खड्गी चापबाणधरो युवा"

धनुर्वेदो धनुर्वेदं वेत्ति दाशरथिस्ततः। ॥ ८५८ ॥
[1]धनुर्भारते युद्धे वेदस्तद्वानितीतरे

दण्डो वै नाम दमनं "दण्डो दमयतां" स्मृतेः। ॥ ८५९ ॥
दण्डं करोति वाऽचष्टे दुष्टेष्वित्यपरेऽब्रुवन्

वैवस्वतनरेन्द्रादिरूपेण दमयत्ययम्। ॥ ८६० ॥
प्रजाः पापवर्तीर्यस्मात्तस्माद्दमयितोच्यते

दण्डकार्यं फलं तच्च स एवेति दमः स्मृतः। ॥ ८६१ ॥
दमो न विद्यतेऽस्यस्माददमोऽयमितीतरे

परिपन्थिगणैर्नैव जित इत्यपराजितः। ॥ ८६२ ॥
दृश्यतेऽत्रापि वचनं "दाशार्हो न पराजितः"

सर्वकर्मसु मानत्वाद्धरिः सर्वसहः स्मृतः। ॥ ८६३ ॥
देवतान्तरपूजाश्च सहतेऽसावितीतरे

नियन्ता स्वेषु कृत्येषु व्यवस्थापयतीतरान्। ॥ ८६४ ॥
तत्तद्भक्त्यनुसारेण पूजां कारयतीतरे

नियमो नियतिस्तस्य नास्तीत्यनियमः स्मृतः।
योगाङ्गभूतनियमगम्यत्वान्नियमोऽथवा ॥ ८६५ ॥

यमो मृत्युर्न तस्यास्ति तस्मादयम उच्यते।
योगाङ्गयमगम्यत्वाद्यम इत्यथवोच्यते ॥ ८६६ ॥

1 धनुः धनुर्वेदः। तं वेत्तीति धनुर्वेदः। इति पूर्वविवरणं।

सत्त्ववान् सात्त्विकः सत्यः सत्यधर्मपरायणः ।
अभिप्रायः प्रियार्होऽर्हः प्रियकृत् प्रीतिवर्धनः ॥ ९३ ॥
विहायसगतिर्ज्योतिः सुरुचिर्हुतभुग्विभुः ।

---

वि— शौर्यवीर्यादिकं सत्त्वं विद्यतेऽस्येति सत्त्ववान् ।
सत्त्वप्रवृत्तिकस्सत्त्वतनुर्वेत्यपरेऽब्रुवन्[1] ॥ ८६७ ॥

प्राधान्येन स्थितस्सत्त्वगुणेऽसाविति सात्त्विकः ।
स्वकटाक्षेण पुरुषं सात्त्विकं कुरुतेऽपरे ॥ ८६८ ॥

सत्सु साधुतया सत्यः सत्यवानिति चेतरे ।
दृश्यतेऽत्रापि वचनं "सत्यमस्मिन् प्रतिष्ठितम्" ॥ ८६९ ॥

यथाभूतार्थकथने चोदनालक्षणेपि च ।
सत्ये धर्मे च नियतः सत्यधर्मपरायणः ॥ ८७० ॥

यदभिप्रेयते सद्भिः पुरुषार्थाभिकाङ्क्षिभिः ।
अभिप्रायो जगत्यैति लयेऽस्मिन्वाऽभिमुख्यतः ॥ ८७१ ॥

प्रियाणीष्टान्यर्हतीति प्रियार्ह इति कीर्तितः ।
"यद्यदिष्टतमं लोके यच्चास्ये"त्यादिवाक्यतः ॥ ८७२ ॥

पूजाप्रशंसास्तुतिभिर्नमस्कारादिभिस्तथा ।
पूजनीयतयार्होऽसौ भक्तार्होऽयमितीतरे ॥ ८७३ ॥

न केवलं प्रियार्होऽयं किन्तु स्तुत्यादिभिर्हरिः ।
प्रियं करोति भजतामिति प्रियकृदुच्यते ॥ ८७४ ॥

स एवं वर्धयन् प्रीतिं भजतां प्रीतिवर्धनः ।
अप्यप्रियकृतां तां स मित्रभावे सतीतरे[2] ॥ ८७५ ॥

विहायसं विहायोऽस्य गतिराश्रय इत्यतः ।
विहायसगतिः विष्णुपदमादित्य एव वा ॥ ८७६ ॥

---

1 सत्यप्रवृत्तिकस्सत्यतनुः इति मातृकायाम् ।
2 अपि प्रिये कृतां तां स मात्रभावे सतीतरे । इति मातृकायाम् ।

रविर्विरोचनः सूर्यः सविता रविलोचनः ॥ ९४ ॥

वि— द्योतते स्वयमेवेति ज्योतिरित्युच्यते हरिः ।
अर्चिरादिगतिर्यस्माद्द्योतते तदितीतरे ॥ ८७७ ॥

शोभना दीप्तिरिच्छा वा यस्याऽसौ सुरुचिः स्मृतः ।
भक्तोद्धरण एतस्य रुचिरित्यपरेऽब्रुवन् ॥ ८७८ ॥

समस्तदेवतोद्देशप्रवृत्तेष्वपि कर्मसु ।
हुतं[1] भुनक्ति भुङ्क्ते वा हुतभुक् परिकीर्तितः ॥ ८७९ ॥

सर्वत्र वर्तमानत्वाद्विभुः यद्वा जगत्प्रभुः ।
यस्मिन्[2] सहुतभुक्सोमो विभुः पूर्ण इतीतरे ॥ ८८० ॥

आदित्यात्मा[3] चरन् व्योम्नि रूयतेऽसौ प्रशस्यते ।
यतोऽसौ रविरित्युक्तो, रसादानादपि क्षितेः ॥ ८८१ ॥

विविधं रोचते यस्मात्तस्मादेष विरोचनः ।
अयं [4]विरोचयत्येतं संवत्सरमितीतरे ॥ ८८२ ॥

सूतेर्वा सुवतेस्सूर्यशब्दश्चायन्निपात्यते ।
पाणिनीया''द्राजसूयसूर्य''त्यादेस्तु वाक्यतः ॥ ८८३ ॥

सविताऽसौ प्रसविता सर्वस्य जगतां हरिः ।
वृष्ट्यादिकं प्रसूतेऽसौ सूर्यद्वारेति केचन ॥ ८८४ ॥

रविस्सूर्यो यस्य चक्षुर्लोचनं रविलोचनः ।
स, ''चक्षुषी चन्द्रसूर्यौ दिशश्श्रोत्र''मिति श्रुतेः ॥ ८८५ ॥

---

1 रक्षोभ्यः पालनं भक्षणं वा विवक्षितमिति भावः ।

2 हुतभोजिभिर्देवैस्सह सोमो यज्ञः यत्राश्रयः इति भावः ।

3 रवते वियति सदा गच्छतीति रविः आदित्यः । रु गतिरेषणयोरिति धातुः । रूयते प्रशस्यते स्तूयत इति रविः । रु शब्द इति धातुः । राति आदत्त इति रविः । रा आदान इति धातुः ।

4 परिच्छिनत्तीत्यर्थः ।

अनन्तो हुतभुग्भोक्ता सुखदो नैकजोऽग्रजः।
अनिर्विण्णः सदामर्षी लोकाधिष्ठानमद्भुतः ॥ ९५ ॥

वि— देशकालानवच्छिन्नोऽनन्तः सर्वगतत्वतः।
[1]नित्यत्वाच्चापि भगवान् शेषरूपधरोऽथवा ॥ ८८६ ॥

[2]हुतभुक् च भुनक्तीति हुतमन्ये प्रचक्षते
सर्वयागेषु हुतभुगिन्द्रो भोक्ता प्रजापतिः ॥ ८८७ ॥

भोक्ता [3]भुनक्ति प्रकृतिमर्यां मोग्यामचेतनाम्।
जगतः पालनाद्वा भोक्तेत्युक्तो महेश्वरः ॥ ८८८ ॥

मोक्षरूपं ददातीति सुखं सुखद उच्यते।
असुखं खण्डयन्नेषोऽसुखदः कीर्तितोऽथवा ॥ ८८९ ॥

नैकजो धर्मगुप्त्यर्थमसकृज्जायते यतः।
असङ्ख्येयस्य [4]भक्तेभ्यो दापनान्नैकदः परे ॥ ८९० ॥

अग्रजोऽग्रे जायते यः प्रापयन् स्वपदं स्वयम्।
अग्रे परमभोग्यश्च जायतेऽयमितीतरे ॥ ८९१ ॥

अवाप्तसर्वकामत्वादनवाप्तेरभावतः।
न विद्यतेऽस्य निर्वेदस्ततोऽनिर्विण्ण उच्यते ॥ ८९२ ॥

सदामर्ष्याभिमुख्येन साधून् क्षमत इत्यतः।
मुक्तान् पश्यन् स्वयं विष्णुः कृतकृत्य इतीतरे ॥ ८९३ ॥

[5]तदाधारमनाधारमधिष्ठाय लयः स्थिताः।
लोका यत् कारणं ब्रह्म लोकाधिष्ठानमुच्यते ॥ ८९४ ॥

1 भाष्यानुसारेणेदमर्धं लिखितम्। मातृकायान्तु बहुभुक् चेत्याद्युत्तरकारिकापूर्वार्धं एतत्कारिकोत्तरार्धत्वेन लिखितम्।

2 अस्य श्लोकस्य स्थाने मातृकायां, "सर्वयागेषु हुतभुगिन्द्रो भोक्ता प्रजापतिः। अनन्तहुतभुग्भोक्ता तावत्सख्यौ तु यस्य सः" इति दृश्यते। अर्थो नावगम्यते।

3 भुनक्तीति स्थाने भुङ्क्ते इति भाष्ये। तदनुसारेण भोक्ता च भुङ्क्ते इति पठनीयम्।

4 भक्तेभ्य इति स्थाने मुक्तेभ्य इति मातृकायाम्।

5 तमाधारमिति भाष्यम्।

सनात्सनातनतमः कपिलः कपिरव्ययः ।

वि— स्वरूपशक्तिव्यापारकार्यैरत्यद्भुतोऽथवा ।
[1]अद्भुतोऽद्भुतवत्प्रोक्तः "श्रवणायापि"वाक्यतः ॥ ८९५ ॥

सनादिति निपातोऽयं चिरार्थवचनः सनात् ।
धातोस्सम्भजनार्थात्स सनातेरिति चेतरे ॥ ८९६ ॥

सर्वकारणभूतानां ब्रह्मादीनां महात्मनाम् ।
सनातनत्वाद्गोविन्दः सनातनतमः स्मृतः ॥ ८९७ ॥

[2]वडवानलरूपत्वाद्वर्णतः कपिलोऽथवा ।
कपिलं ध्येयमित्यन्ये "नीलतोयद"वाक्यतः ॥ ८९८ ॥

कपिस्सूर्यः कं जलं स रश्मिभिः पिबतीत्यतः ।
वराहो वा कपिः तोयात्पृथिव्याः पालनाद्धरिः ॥ ८९९ ॥

अप्ययः प्रळये याति जगदस्मिन् लयं यतः ।
[3]विशिष्यतेऽप्ययत्वेन कपिरित्यपरेऽब्रुवन् ॥ ९०० ॥

इति श्रीविष्णुसहस्रनामविवरणकारिकायां
नवमं शतकम्



1 अद्भुतमित्यपि केरळेषु नामपाठः ।

2 वडवानलेति स्थाने 'वद्वाह्निस्व' इति दृश्यते मातृकायाम् । अर्थो न बुध्यते । ...ानुसारेणात्र लिखितम् ।

3 अप्ययः कपिरित्येकनामेत्युत्तरार्धार्थः ।

# दशमं शतकम्

स्वस्तिदः स्वस्तिकृत्स्वस्ति स्वस्तिभुक् स्वस्तिदक्षिणः ॥ ९६ ॥
अरौद्रः कुण्डली चक्री विक्रम्यूर्जितशासनः ।

---

वि— स्वस्तिदः स्वस्ति भक्तानां मङ्गळं प्रददात्यतः ।
"स्मृते सकलकल्याणभाजनं यत्र"वाक्यतः ॥ ९०१ ॥

तदेवैष करोतीति स्वस्तिकृत् परिकीर्तितः ।
शुभानि कारयत्येष कर्माणीत्यपरेऽब्रुवन् ॥ ९०२ ॥

आत्मीयं मङ्गळं रूपं स्वस्तीति परिकीर्तितम् ।
मङ्गळानान्निदानत्वात्स्वस्तीत्यन्ये प्रचक्षते ॥ ९०३ ॥

स्वस्तिभुक् भुङ्क्त इत्येव स्वस्ति चानन्दलक्षणम् ।
भुनक्तीत्यथवा प्रोक्तो भक्तानां स्वस्ति मङ्गळम् ॥ ९०४ ॥

दक्षते वर्धते स्वस्तिरूपेण स्वस्तिदक्षिणः ।
स्वस्ति क्षिप्रं प्रदातुं वा समर्थः स्वस्तिदक्षिणः ॥ ९०५ ॥

रौद्रं कर्म तथा रागः क्रोधश्च त्रयमस्य न ।
अवाप्तसर्वकामत्वाद् अरौद्र इति कीर्तितः ॥ ९०६ ॥

सूर्यमण्डलसङ्काशकुण्डलद्वयधारणात् ।
कुण्डलीत्युच्यते यद्वा कुण्डली शेषरूपभाक् ॥ ९०७ ॥

समस्तलोकरक्षायान्दक्षमेष सुदर्शनम् ।
मनस्तत्त्वात्मकं धत्त इति चक्रीति कीर्तितः ॥ ९०८ ॥

विक्रमः पदविक्षेपः शौर्यं यस्य विलक्षणम् ।
अशेषपुरुषेभ्यो यद्विद्यते विक्रमी ततः ॥ ९०९ ॥

ऊर्जितं शासतं यस्य श्रुतिस्मृत्यादिलक्षणम् ।
"श्रुतिस्मृती ममे"त्यादिवाक्यादूर्जितशासनः ॥ ९१० ॥

शब्दातिगः शब्दसहः शिशिरः शर्वरीकरः ॥ ९७ ॥
अक्रूरः पेशलो दक्षो दक्षिणः क्षमिणां वरः ।
विद्वत्तमो वीतभयः पुण्यश्रवणकीर्तनः ॥ ९८ ॥

वि— शब्दप्रवृत्तिहेतूनां जात्यादीनामसम्भवात् ।
शब्देन शक्यते नासौ वक्तुं शब्दातिगः ततः ॥ ९११ ॥
सर्वे वेदा एतमेव तात्पर्येण वदन्ति यत् ।
ततः शब्दसहः "सर्वे वेदा यत्पद"मित्यतः ॥ ९१२ ॥
तापत्रयाभितप्तानां शिशिरो विश्रमास्पदम् ।
आर्तिभशब्दश्रवणादागतस्त्वरया खलु ॥ ९१३ ॥
अज्ञानां[1] शर्वरीवात्मा संसृतिर्विदुषां तथा ।
तां करोत्युभयेषां यत्स तस्माच्छर्वरीकरः ॥ ९१४ ॥
क्रौर्यन्नाम मनोधर्मः क्रोधजस्तदभावतः ।
अक्रूरोऽवाप्तकामत्वात् कामक्रोधाद्यभावतः ॥ ९१५ ॥
कर्मणा मनसा वाचा वपुषा पेशलः शुभः ।
"प्रसन्नवदनाम्भोज"मित्यादिमुनिवाक्यतः ॥ ९१६ ॥
प्रवृद्धसर्वप्रकारी च शक्तो दक्षः प्रकीर्तितः ।
"इमं दूरगतो हत्वा त्वा"मित्यादिषु दर्शनात् ॥ ९१७ ॥
असौ दक्षिणशब्दोऽपि दक्षशब्दार्थ एव हि ।
दक्षतेर्गमनार्थाद्वा हिंसार्थाद्वाथ दक्षिणः ॥ ९१८ ॥
भारवाहकपृथ्व्यादिक्षमावद्योगिनामपि[2] ।
श्रेष्ठः, सर्वक्रियाः कर्तुं शक्तो वा क्षमिणां वरः ॥ ९१९ ॥
निरस्तातिशयं ज्ञानं सर्वदा सर्वगोचरम् ।
अस्यास्ति नेतरेषान्तदिति विद्वत्तमो हरिः ॥ ९२० ॥
सर्वेशत्वान्नित्यमुक्तभावाद्वीतं गतं भयम् ।
सांसारिकञ्च सततमस्य वीतभयस्ततः ॥ ९२१ ॥

1 आत्मा अज्ञानां शर्वरीव । विदुषां संसृतिरपि । अप्रकाशमानत्वं साधारणधर्मः ।
2 भारवाहकानां पृथ्व्यादीनां क्षमावतां योगिनाञ्चेत्यर्थः ।

उत्तारणो दुष्कृतिहा पुण्यो दुःस्वप्ननाशनः ।
वीरहा रक्षणः सन्तो जीवनः पर्यवस्थितः ॥ ९१ ॥

वि— श्रवणं कीर्तनञ्चास्य पुण्यं पुण्यतरं यतः ।
"य इदं शृणुयान्नित्य"मिति पुण्यश्रवणकीर्तनः ॥ १२२ ॥

उत्तारयति संसारवार्धेः उत्तारणस्ततः ।
"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" ॥ १२३ ॥

हन्तीत्यतो दुष्कृतिहा दुष्कृतीः पापसंज्ञिताः ।
"कृष्णानुस्मरणादेव पाप"मित्यादिषु दर्शनात् ॥ १२४ ॥

पुण्यः पुण्यं करोतीति स्मरणं कुर्वतान्नृणाम् ।
पुण्यमाचष्ट इति वा वाचा श्रुत्यादिरूपया ॥ १२५ ॥

वन्दितः पूजितो ध्यातो भाविनोऽर्थस्य सूचकम् ।
दुःस्वप्नं नाशयत्येषः ततो दुःस्वप्ननाशनः ॥ १२६ ॥

संसारिणां गतिं हन्ति विविधां मुक्तिदानतः ।
"मोक्षयामास नागेन्द्र"मिति वाक्याच्च वीरहा ॥ १२७ ॥

सत्त्वं गुणमधिष्ठाय जगद्रक्षन् स रक्षणः ।
"नन्द्यादित्वात्कर्तरि ल्यु"रिति भाष्यकृदब्रवीत् ॥ १२८ ॥

सन्मार्गवर्तिनस्सन्तः विद्याविनयवृद्धये ।
स एव तत्स्वरूपेण वर्तते सन्त[2] इत्यतः ॥ १२९ ॥

जीवनोऽसौ प्रजास्सर्वाः प्राणरूपेण जीवयन् ।
गन्धर्वत्वेन तं ग्राहमपि जीवयतीतरे ॥ १३० ॥

विश्वं व्याप्यावस्थितोऽसौ सर्वतः पर्यवस्थितः ।
"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" ॥ १३१ ॥

---

1 विपूर्वादीरेर्भावे घञि वीरः । संसारिणां विविधा गतीः मुक्तिप्रदानेन हन्तीति वीरहा ।

2 बहुवचनान्तमिदन्नाम ।

**अनन्तरूपोऽनन्तश्रीर्जितमन्युर्भयापहः ।**
**चतुरश्रो गभीरात्मा विदिशो व्यादिशो दिशः ॥ १०० ॥**

---

वि — **अनन्तरूप** एतस्य प्रपञ्चात्मतया स्थितौ ।
रूपाणि सन्त्यनन्तानि "पश्यात्मा"निति स्मृतेः ॥ ९३२ ॥

**अनन्तश्रीः** परा शक्तिरस्यापरिमितेत्यतः ।
"परास्य शक्तिर्विविधैव श्रूयत" इति श्रुतेः ॥ ९३३ ॥

मन्युः क्रोधो जितो येन **जितमन्युरसौ** स्मृतः ।
जगद्द्वेषिण्यपि ग्राहे गान्धर्व्यपावनात्परे ॥ ९३४ ॥

**भयापहः** स्वभक्तानां नुदन् संसारजं भयम् ।
"सकृदेव प्रपन्नाय तवास्मी"त्यादिवाक्यतः ॥ ९३५ ॥

प्रयच्छति स्वानुरूपं फलं [1]पुंसां स्वभावतः ।
**चतुरश्रो**ऽथवा न्यायसमवेत इति प्रभुः ॥ ९३६ ॥

आत्मा स्वरूपं चित्तं वा गभीरं परमेशितुः ।
परिच्छेत्तुमशक्यत्वाद् **गभीरात्मा** हरिः स्मृतः ॥ ९३७ ॥

विशेषेणाधिकारिभ्यो विविधानि फलानि सः ।
**विदिशो** दिशतीत्ये"को बहूना"मिति वाक्यतः ॥ ९३८ ॥

**व्यादिशो** विविधामाज्ञां कुर्वन्नेषोऽधिकारिणाम्[2] ।
कर्तुमिष्टमनिष्टं वा कः प्रभुर्विष्णुना विना ॥ ९३९ ॥

फलं ददाति सर्वेषां [3]देवतारूपतो **दिशः** ।
गजेन्द्रमोचनेनैव ब्रह्मादेर्हर्षदः परे ॥ ९४० ॥

---

1 पुण्यमिति मातृकायां दृश्यते । भाष्यानुसारेण तु पुंसामिति लिखितम् । पुंसां कर्मानुरूपं फलं प्रयच्छतीति न्यायसमवेत इति च लघुविवरणम् ।

2 शक्रादीनामित्यर्थः । शक्रादीन् पालनादौ विविधमादिशन्नियुञ्जान इति लघुविवरणे ।

3 समस्तानां कर्मणां फलानि दिशन् वेदात्मना दिश इति मुद्रितभाष्यपुस्तके दृश्यते । वेदात्मनेति स्थाने देवात्मनेति पाठेन भाव्यमिति देवतारूपत इति अत्र, देवात्मना इति लघुविवरणे च निर्देशात् ज्ञायते ।

अनादिर्भूर्भुवो लक्ष्मीः सुवीरो रुचिराङ्गदः ।
जननो जनजन्मादिर्भीमो भीमपराक्रमः ॥ १०१ ॥

वि — अनादिः कारणत्वात्, भक्तैः स्वल्पगुणैरपि[1] ।
आदीयते यथा नैवं ब्रह्मादिभिरितीतरः ॥ ९४१ ॥

भूर्भुवोऽसौ भुवो भूम्या अपि आश्रयत्वतः[2] ।
भुवो लक्ष्म्याश्च शोभासौ भूर्भुवो न तु केवलम्[3] ॥ ९४२ ॥

अथवा भूर्भुवो लोकौ लक्ष्मीर्विज्ञानमात्मनः ।
एतत्त्रयात्मको[4], यद्वा शोभा भूम्यन्तरिक्षयोः ॥ ९४३ ॥

शोभना[5] विविधा ईयुः गतयो यस्य सोऽच्युतः ।
सुवीरः शोभनश्चेतु विविधश्चेति केचन ॥ ९४४ ॥

कल्याणे अङ्गदे यस्य स एष रुचिराङ्गदः ।
कल्याणमङ्गं भक्तेभ्यो ददातीत्यपरेऽब्रुवन् ॥ ९४५ ॥

जननो जनयञ्जन्तून् ल्युड्विधौ बहुलग्रहात् ।
कर्तरि ल्युट्प्रत्ययोऽसौ प्रयोगवचनादिवत् ॥ ९४६ ॥

जनस्यासौ जनिमतो जन्मनो जननस्य वै ।
आदिः परं कारणं हि जनजन्मादिरच्युतः ॥ ९४७ ॥

भयहेतुतया भीमो भक्त्यभाववतान्नृणाम् ।
"महद्भयं वज्रमु"दित्यादिवेदान्तवाक्यतः ॥ ९४८ ॥

---

1 आदीयत इत्यादिः । न आदिरनादिः । स्वल्पगुणैरपि भक्तैर्यथा भगवान् वशीक्रियते, गृह्यते वा, न यथा ब्रह्मादिभिरपीत्यर्थः ।

2 आश्रयो यत इति वा पाठः ।

3 असौ न केवलं भुवो भूः आधारः, किन्तु शोभा चेत्यर्थः ।

4 पूर्वोक्तभूर्लोक-भुवर्लोक-आत्मविद्या-एतत्त्रितयात्मक इत्यर्थः । भूरिति भूर्लोकवाचि रेफान्तमव्ययम् । भुव इत्यन्तरिक्षार्थकं षष्ठ्यन्तप्रतिरूपकमव्ययम् । अत्र भुवो भुवे नमः, लक्ष्म्यै नमः इति प्रथमपक्षे, भुवे नमः भुवो लक्ष्म्यै नमः इति द्वितीयपक्षे, अथवेत्यादि-पक्षद्वये भूर्भुवो लक्ष्म्यै नमः इति च पूजाविनियोगयोग्यरूपाणि बोध्यानि ।

5 गतयः भक्तैर्गन्तव्या गतयः । ईते सूर्यो विश्वरूपेण गच्छति इति लघुविवरणे ।

आधारनिलयोऽधाता पुष्पहासः प्रजागरः ।
ऊर्ध्वगः सत्पथाचारः प्राणदः प्रणवः पणः ॥ १०२ ॥

---

वि— अवतारेषु दैत्यादेर्भयहेतुः पराक्रमः ।
विद्यतेऽस्य यतस्तस्मादेष भीमपराक्रमः ॥ ९४९ ॥

आधाराणां पृथिव्यादिभूतानां पञ्चकस्य च ।
आधारत्वादसौ प्रोक्तो ह्याधारनिलयो हरिः ॥ ९५० ॥

अधाताऽन्यो न धातास्य स्वात्मनैव धृतस्य हि ।
धाता संहारसमये प्रजा वा धयतीत्यतः ॥ ९५१ ॥

मुकुलीकृतपुष्पाणां यथा हासस्तथास्य च ।
विकारो हि प्रपञ्चोऽयं पुष्पहासस्ततो हरिः ॥ ९५२ ॥

नित्यबुद्धस्वरूपत्वात् प्रजागर इति स्मृतः ।
जागर्ति भक्तविषये प्रकर्षेण सदेतरे ॥ ९५३ ॥

तिष्ठन्नुपरि सर्वेषाम् ऊर्ध्वगः परिकीर्तितः ।
स्वानूर्ध्वं गमयत्येष इत्यन्ये तु प्रचक्षते ॥ ९५४ ॥

तान् कुर्वन् सत्पथाचारः सतां कर्माणि सत्पथाः ।
प्रवर्तयति सन्मार्गमित्यन्ये तु प्रचक्षते ॥ ९५५ ॥

जीवयन् प्राणदः प्रोक्तः परीक्षित्प्रभृतीन्मृतान् ।
"गुरुपुत्रमिहानीतमानये"त्यादिवाक्यतः ॥ ९५६ ॥

वाचकः प्रणवो नाम परमात्मन इत्यतः ।
तदभेदोपचारेण प्रणवः परिकीर्तितः ॥ ९५७ ॥

पणति व्यवहारं वा करोतीति पणोऽथवा ।
पणं सङ्गृह्य कर्माणि प्रयच्छंस्तत्फलं पणः ॥ ९५८ ॥

---

1 धयति पिबति ।

2 सतां कर्माणि सत्पथाः । तान् कुर्वन्निति योजना ।

प्रमाणं प्राणनिलयः प्राणभृत्प्राणजीवनः ।
तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः ॥ १०३ ॥
भूर्भुवःस्वस्तरुस्तारः सविता प्रपितामहः ।

वि— **प्रमाणं** प्रमितिस्संवित् "प्रज्ञानं ब्रह्म"वाक्यतः ।
"ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः" ॥ ९५९ ॥

जीवात्मा **प्राणनिलयः** निलीयन्तेऽसवोऽत्र यत् ।
प्राणाः प्राणन्तीति यद्वा जीवास्तानुपसंहरन् ॥ ९६० ॥

**प्राणभृ**च्चान्नरूपेण प्राणान्पोषयतीत्यतः ।
स्वभक्तान्भरयत्येष स्वप्राणवदितीतरे ॥ ९६१ ॥

प्राणिनो[1] जीवयत्यन्नैः प्राणाख्यैः **प्राणजीवनः** ।
"इतरेण[2] तु जीवन्ति यस्मिन्नेता"विति श्रुतेः ॥ ९६२ ॥

**तत्त्वञ्च** परमार्थं सत् सत्यं ब्रह्म तथाऽमृतम्[3] ।
एकार्थवाचिनस्त्वेते ब्रह्मणो वाचकास्ततः ॥ ९६३ ॥

यथावद्वेत्ति यस्तत्त्वं स्वरूपं **तत्त्ववि**न्मतः ।
मुख्यस्तत्त्वविदां शेषां रूपमस्येति चेतरे ॥ ९६४ ॥

एकश्चासौ तदात्मेति चैकात्मेत्युच्यते हरिः ।
एकस्मिंस्तत्त्वविद्ध्येव[4] यस्य चित्तमितीतरे ॥ ९६५ ॥

अस्ति[5] जायत इत्याद्या विकाराष्षड् भवन्ति ये ।
अतीत्य गच्छतीत्येतान् **जन्ममृत्युजरातिगः** ॥ ९६६ ॥

होमादिना व्याहृतिभिस्तरति प्लवतेऽथवा ।
जग,द्यद्वा व्याप्य लोकान् भूर्भुवस्स्वस्तरुः स्थितेः ॥ ९६७ ॥

---

1 प्राणाख्यैः पञ्चभिर्वायुभिः प्राणिनां जीवन इति कतुविवरणे ।

2 न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ । इति समग्रा श्रुतिः ।

3 स्मृतमिति मातृकायाम् । तच्च भाष्यानुसारि । असङ्गतार्थञ्च ।

4 तत्त्वविद्धि एव इति छेदः ।

5 अस्ति जायते वर्धते विपरिणमते अपक्षीयते नश्यतीति षड्विकाराः ।

**यज्ञो यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः ।**
**यज्ञभृद्यज्ञकृद्यज्ञी यज्ञभुग्यज्ञसाधनः ॥ १०४ ॥**

---

वि - संसारसागराद्दैवं तारयन् तार उच्यते ।
ज्ञानदत्वेन "तरति शोकमात्मवि"दित्यतः ॥ ९६८ ॥

सर्वलोकस्य जनक इत्यतः सविता हरिः ।
पुरुषात्प्रकृतिस्सर्वं सूयते हि चराचरम् ॥ ९६९ ॥

पिता पितामहस्यापि ततोऽसौ प्रपितामहः ।
"गरीयसे ब्रह्मणोऽप्यादिकर्त्रे" इति वाक्यतः ॥ ९७० ॥

सङ्गन्ता यज्ञ इतरे स्वमेवासौ प्रपूजयत् ।
"आत्मानं पूजयन् राम" वचनादिति चक्षते ॥ ९७१ ॥

भोक्ता स्वामी च यज्ञानामसौ यज्ञपतिस्ततः ।
"अहं हि सर्वयज्ञानां भोक्ता च प्रभु"रित्यतः ॥ ९७२ ॥

यजमानात्मना यज्वा स्वयञ्च विधिनेष्टवान् ।
"अश्वमेधशतैरिष्ट्वा तथास"न्निति वाक्यतः ॥ ९७३ ॥

अङ्गानि यज्ञा अस्येति यज्ञाङ्गः क्रोडरूपधृक् ।
[2] "वेदपादो यूपदंष्ट्र" इत्यादिमुनिवाक्यतः ॥ ९७४ ॥

फलहेतूनसौ यज्ञान् वाहयन् यज्ञवाहनः ।
इज्यतेऽनेनेति वेदो यस्य वाह इतीरे ॥ ९७५ ॥

यज्ञं बिभर्ति पातीति यज्ञभृत्परिकीर्तितः ।
स्मृतिपूर्णाहुतिभ्यां तं पुष्णातीतीतरेऽब्रुवन् ॥ ९७६ ॥

आदौ करोति जगतो यश्चान्ते च कृन्तति ।
इति यज्ञकृदन्ये तु कृन्तन् यज्ञं बलेरिति ॥ ९७७ ॥

---

1 समाधौ भक्तः, व्याप्तत्वात्सर्वेषां सङ्गन्ता । यज् देवपूजासङ्गतिकरणदानेषु इति लघुविवरणं ।

2 वेदपादो यूपदंष्ट्रः क्रतुदन्तश्चितीमुखः । अग्निजिह्वो दर्भरोमा ब्रह्मशीर्षो महातपाः इत्यादिहरिवंशे । क्रोडो वराहः ।

3 कृतः कृन्ततेर्वा क्विप् ।

यज्ञान्तकृद्यज्ञगुह्यमन्नमन्नाद एव च ॥ १७७ ॥
आत्मयोनिः स्वयञ्जातो वैखानः सामगायनः ।

वि— यज्ञी शेषीति यज्ञानां तत्समाराधनात्मनाम् ।
भक्तैः कृतज्ञानरूपोपासनानामितीरितः ॥ १७८ ॥

विश्वामित्रादियज्ञानां कण्टकोद्धरणादिना ।
पालको यज्ञभुक् प्रोक्तः "स हन्ता रक्षसामिति" ॥ १७९ ॥

यज्ञस्साधनमेतस्य प्राप्तौ तद्यज्ञसाधनः ।
"सर्वं कर्माखिलं पार्थ ज्ञाने" इत्यादिवाक्यतः ॥ १८० ॥

यज्ञस्यान्तं फलावाप्तिं कुर्वन् यज्ञान्तकृद्धरिः ।
[1]वैष्णव्याऽन्ते ऋचा पूर्णाहुत्या वा तत्समाप्तिकृत् ॥ १८१ ॥

यज्ञगुह्यं ज्ञानयज्ञः तद्ब्रह्मण्युपचारतः ।
फलाभिसन्धिरहितो यज्ञो वा यज्ञगुह्यकम् ॥ १८२ ॥

[2]अद्यतेऽत्ति च भूतानीत्यन्नमन्नेन हूयते ।
भक्तैरद्यत इत्याहुः सदा "पश्यन्ति सूरयः" ॥ १८३ ॥

अन्नादश्चान्नमत्तीति चैवाभ्यां सिध्यति द्वयम् ।
सर्वनाम्नां परे [3]वृत्तिरभेदो जगतस्तथा ॥ १८४ ॥

[4]आत्मयोनिरुपादानकारणत्वान्यदस्त्यतः ।
जगतामित्यतः प्रोक्त आत्मयोनिरितीश्वरः ॥ १८५ ॥

निमित्तकारणश्चापि स एवेति प्रदर्शितम् ।
स्वयञ्जात इति स्मृत्या [5]प्रकृतिश्चेति सूत्रतः ॥ १८६ ॥

1 वैष्णवान्तेन वा इति मातृकायाम् । तदर्थो नावगम्यते । वाशब्दाधिक्यञ्च । अतो भाष्यानुसारेणात्र लिखितम् ।

2 अद्यते भुज्यत इति ओषधिवनस्पत्यादिभोग्यरूपं ब्रह्म । अत्तीति । प्रळये अत्तीत्यर्थः । कर्माविवक्षया कर्तरि क्त इति लघुविवरणे । भक्तैरद्यते भक्तैरनुभूयते ।

3 वृत्तिरित्यस्य पूर्वमक्षरद्वयशून्या मातृका ।

4 आत्मैव योनिरिति विग्रहः । प्रथमातशब्दस्य आत्मन इत्यर्थः ।

5 प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् इति शारीरकसूत्रम् ।

देवकीनन्दनः स्रष्टा क्षितीशः पापनाशनः ॥ १०६ ॥
शङ्खभृन्नन्दकी चक्री शार्ङ्गधन्वा गदाधरः ।

वि— विशेषेणावनेः खानं खननं तस्य चैष यत् ।
कर्ता वैखान इत्युक्तो वराहवपुरीश्वरः ॥ ९८७ ॥

सामानि गायतीत्युक्तः सामगायन ईश्वरः ।
"सामगायन्नास्त" इति "हा वुहे"त्यादिदर्शनात् ॥ ९८८ ॥

देवक्या नन्दनत्वेन देवकीनन्दनः स्मृतः ।
[1]"देवकीपुत्र एवे"ति महाभारतवाक्यतः ॥ ९८९ ॥

स्रष्टा सर्वस्य लोकस्य "स इदं सर्व"मित्यतः ।
"इमान् लोकानसृजताम्भोमरीचि"रिति श्रुतेः ॥ ९९० ॥

क्षितीशोऽसौ क्षितेर्भूमेरीशो दशरथात्मजः ।
भूभारजनितक्लेशनिर्हारार्थश्च यादवः ॥ ९९१ ॥

कीर्तितः पूजितो ध्यातः स्मृतोऽसौ पापनाशनः ।
[2]"पक्षोपवासा"दित्यादिवृद्धशातातपस्मृतेः ॥ ९९२ ॥

भूताद्यहङ्कारमयः पाञ्चजन्याभिधस्तथा ।
शङ्खो यस्तं बिभर्तीति शङ्खभृत् परिकीर्तितः ॥ ९९३ ॥

विद्यामयो नन्दकाख्यः खड्गोऽस्यास्तीति नन्दकी[3] ।
"सन्नद्धः कवची खड्गी चापी"त्यादिषु दर्शनात् ॥ ९९४ ॥

चक्रमस्यास्तीति चक्री मनस्तत्त्वमयं शुभम् ।
"ग्राहाद्विपाटितमुखादरिणे"त्यादिदर्शनात् ॥ ९९५ ॥

---

1 ज्योतींषि शुक्राणि च यानि लोके त्रयो लोका लोकपलास्त्रयी च । त्रयोग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव इति महाभारतवचनम् ।

2 पक्षोपवासाद्यत्पापं पुरुषस्य प्रणश्यति । प्राणायामशतेनैव तत्पापं नश्यते नृणाम् ॥ प्राणायामसहस्रेण यत्पापं नश्यते नृणाम् । क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति । इति शातातपस्मृतिः ।

3 नान्दकीति केरळीयाः प्रायेण पठन्ति ।

रथाङ्गपाणिरक्षोभ्यः सर्वप्रहरणायुधः ॥ १०७ ॥

वि— अस्तीन्द्रियाद्यहङ्कारपर्यन्तात्मकमस्य हि ।
शार्ङ्गनाम धनुस्तस्माच्छार्ङ्गधन्वेति कीर्तितः ॥ ९९६ ॥

वहन् गदाधरः प्रोक्तो बुद्धितत्त्वात्मिकां गदाम् ।
"श्रीवत्सं कौस्तुभं मालां गदा"मित्यादिदर्शनात् ॥ ९९७ ॥

रथाङ्गपाणिर्यत्पाणौ रथाङ्गं चक्रमस्ति सः ।
चक्रीत्यत्र[1] तु तत्स्वाम्यं चक्रभृत्त्वमिहोच्यते ॥ ९९८ ॥

अत एवायमक्षोभ्योऽशक्यक्षोभणः परैः ।
प्रपन्नाभयदानाख्यव्रतदार्ढ्यादितीतरे ॥ ९९९ ॥

एतावन्त्येवायुधानि विद्यन्तेऽस्य न केवलम् ।
किन्तु सर्वाणि सन्तीति सर्वप्रहरणायुधः ॥ १००० ॥

इति श्रीविष्णुसहस्रनामविवरणकारिकायां
दशमं शतकम्

नमो महाभारतकृन्मुनिभ्यो
नमोऽस्तु तच्छङ्करभाष्यकृद्भ्यः ।
नमोऽस्तु सर्वेश्वरतीर्थवर्य-
गुरुभ्य ईशस्य च सम्भवेभ्यः[2] ॥



1 चक्रीत्यत्र तु तत्स्वाम्यं चक्रकृत्त्वमिहोच्यते इति मातृकायाम् ।
2 सम्भवेभ्यः अवतारभूतेभ्यः ।